यत्किञ्चिद्वितथं यदप्यनुचितं यल्लोकलोकोत्तरो–
त्तीर्णं यद् भवहेतुरेव भविनां यच्छास्त्रबाधाकरम् ।
तत्तद्धर्म इति ब्रुवन्ति कुधियो मूढास्तदङ्गीकृत,–
भ्रान्त्या यान्ति च हा ! दुरन्तदुःषमासाम्राज्यस्य विस्फूर्जितम् ॥ २८ ॥

व्याख्या—यत्किञ्चि० ॥ कुधियः–कुपण्डितास्तत् वस्तु धर्मरूपतया ब्रुवन्ति, तत्किं ? यत् किं तत्राह–यत् किंचित् वितथं अलीकं श्रेणिकराजनरकोद्धरणवदनादि यदपि अनुचितं अयोग्यं पितापुत्रादेशेन यात्राकरणादि अथवा जिनमन्दिरे लकुटक्रीडादिकमयोग्यं, यत् लोकलोकोत्तरोत्तीर्णं–लोकलोकोत्तरमार्गात् उत्तीर्णं यथा मृतकगृहे भिक्षाग्रहणादि रजस्वलापूजा, हीनजातिभ्यः परमेष्ठिमन्त्रपाठनं दीक्षणं जैनेन्द्रप्रतिमाकारणं च, तथा यद् भविनां–भव्यानां भवहेतुः–संसारहेतुः । एवं निश्चयेन जिनमन्दिरे जलक्रीडादि यत् शास्त्रस्य बाधाकरं–सिद्धान्तविरुद्धम् आधाकर्मभोजनादि । अथ श्रावणाधिक्ये पर्युषणाया अशीतितमेऽह्नि विधानम्, इत्यादि धर्मतया प्ररूपयन्ति मूढाः–मूर्खास्तद् अङ्गीकृतभ्रान्त्या–भगवन्मतभ्रमेण यान्ति–स्वीकुर्वन्ति शुक्तिशकले रजतवत् । 'हा' इति खेदे दुरन्तदुःषमासाम्राज्यस्य–दुष्टासंयतपूजालक्षणस्य विस्फूर्जित–विलसितं पश्यतेति ॥२८॥

कष्टं नष्टदिशां नृणां यदृशां जात्यन्धवैदेशिकः,
कान्तारे प्रदिशत्यभीप्सितपुराध्वानं किलोत्कन्धरः ।
एतत्कष्टतरं तु सोऽपि सुदृशः सन्मार्गगांस्तद्विदः,–
स्तद्वाक्याननुवर्तिनो हसति यत्तानप्रमत्तानपि च ॥ २९ ॥

व्याख्या—कष्टं० ॥ यस्मात्कारणात् किलेति सत्येन नृणां–मनुष्याणां जात्यन्धवैदेशिकः, जात्या–जन्मना अन्धः–नेत्रविकलः, स चासौ वैदेशिकः–विदेशोत्पन्नः । एवम्भूतः कश्चित् कान्तारे–अटव्याम् अभीप्सितपुराध्वानम्, अभीप्सितस्य–इष्टस्य पुरस्य अध्वानं–मार्गं प्रदिशति दर्शयति तत्कष्टम् । कथम्भूतानां नृणां ? नष्टदिशां–दिङ्मूढानाम् । पुनः कथम्भूतानाम् ? अदृशां–दृष्टिविकलानामन्धानाम् कथम्भूतो जात्यन्धवैदेशिकः ? उत्कन्धरः–ऊर्ध्वीकृतग्रीवः, यो मार्गं दर्शयति स ग्रीवामूर्ध्वां करोति । तु–पुनः एतत् कष्टतरम्–अतिशयेन कष्टं, तदाह–सोऽपि जात्यन्धवैदेशिकः यत्–यस्मात् सुदृशः–सुनेत्रान् पुरुषान् हसति तत्कष्टतरम् । कथम्भूतान् सुदृशः ? सन्मार्गगान्–शोभनमार्गगमनशीलान् । पुनः कथम्भूतान् ? तद्विदः–शोभनमार्गगमनज्ञान् पुनः कथम्भूतान् ? तद्वाक्याननुवर्तिनः, तद्वाक्य–जात्यन्धवाक्ये अनुवर्तिनः–

न प्रवर्तकास्तान्। कथं हसति? तत्राह—सावद्य-साहङ्कारम् अज्ञानिव-मूर्खानिव, यथा मत्ता हसन्ति तथा सोऽपि हसति-अहो! महाभयेन गच्छति। एतत्तु कष्टतरं पथस्य मार्गदर्शनं तत्तु कष्टम् ॥ २९ ॥

सैषा हुण्डावसर्पिण्यनुसमयहसद्भूव्यभावानुभावा,—
त्रिंशद्भोमग्रहोऽयं खखनलमितवर्षस्थितिर्भस्मराशिः ।
अन्त्यं चाश्चर्यमेतज्जिनमतहतये तत्समा दुष्षमा चे,—
त्येवं दुष्टेषु पुष्टेष्वनुकलमधुना दुर्लभो जैनमार्गः ॥ ३० ॥

व्याख्या—सैषा० ॥ सा एषा-प्रत्यक्षा हुण्डावसर्पिणी-हुण्डसंस्थानेन सहिताऽवसर्पिणी-एतत्कालः। कथम्भूता? अनुसमयहसद्भूव्यभावानुभावा, अनुसमयं-प्रतिसमयं हसन्तः-हीयमानाः भव्याः-प्रधानाः, भावाः-पदार्थास्तेषामनुभावः-प्रभावो यस्यां सा-अनुसमयहसद्भूव्यभावानुभावा। च-पुनः त्रिंशः-त्रिंशत्तमोऽयं भस्मराशिरुग्रग्रहः-उत्कटग्रहः। कथम्भूतः? एकराशौ ख-ख नलमितवर्षस्थितिः, खं खं-शून्यं शून्यं नलाः विंशतिस्तैर्मित(२०००) वर्षस्थितिः-ग्रहाणां वक्रगत्या द्विसहस्रवर्षस्थितिः। च-पुनः एतत्-प्रत्यक्षम् अन्त्यमाश्चर्यम्-असंयतपूजालक्षणं तत्समा-पूर्वोक्तत्रिवैरितुल्या, दुष्षमाकालमेव:, जिनमतहतये-जिनमतहानिकरणाय, इत्येवं चतुर्षु दुष्टेषु-खलेषु अनुकलं-निरन्तरं पुष्टेषु सत्सु अधुना जैनमार्गो दुर्लभः। एकस्यापि वैरिणः योगे साधुवृत्तिर्न कथं चतुःसंयोगे जैनमार्गे इति? ॥ ३० ॥

अथ गुणिद्वेषपरीहारं दर्शयति—

सम्यग्मार्गेषुषः प्रशान्तवपुषः प्रीतोल्लसच्चक्षुषः,
श्रामण्यर्द्धिमुपेयुषः स्मयमुषः कन्दर्पकक्षप्लुषः ।
सिद्धान्ताध्वनि तस्थुषः शमयुषः सत्पूरुषतो जग्मुषः,
सत्साधून् विदुषः खलाः कटुदृशः क्षाम्यन्ति नोपद्रुषः ॥ ३१ ॥

व्याख्या—सम्यग् ॥ खला-दुर्जनाः चैत्यवासिनः सत्साधून्-शोभनानगारान् न क्षाम्यन्ति। कथम्भूतान्? सम्यग्मार्गेषुषः-शुद्धमार्गपोषकान्। पुनः किंविशिष्टान्? प्रशान्तवपुषः-प्रशान्तस्वरूपशरीरान्। पुनः कथम्भूतान्? प्रीते उल्लसन्ती चक्षुषी येषां ते तान्। पुनः किम्भूतान्? श्रामण्यर्द्धिचारित्रसमृद्धिमुपेयुषः-प्राप्तवन्तः। पुनः किम्भूतान्? स्मयमुषः, स्मयम्-अहङ्कारं मुष्णन्तीति अहङ्कारतिरस्कारिणः पुनः

किम्भूतान् ? कन्दर्पकक्षप्लुषः-कन्दर्प एव कक्षं-शुष्कतृणं तं प्लुषन्ति-दहन्ति ये तान्। पुनः किम्भूतान् ? सिद्धान्ताध्वनि-सिद्धान्तमार्गे तस्थुषः-स्थितवन्तः। प्रशमयुषः-उपशमयुक्तान्। पुनः किम्भूतान् ? सत्पूज्यतां-सिवक्रिपूज्यत्वं जग्मुषः-प्राप्तान्। पुनः विदुषः-दक्षान्। अथ कीदृशाः खलाः ? कृतदुषः-विहितदोषाः। पुनः किम्भूताः ? उद्यद्रुषः,उद्यन्-प्रकटीभवन् रुष-रोषो येषां ते, एवम्भूता, गुणिषु द्वेष वहन्त्येव ॥२१॥

देवीयत्युरुदोषिणः क्षतमहादोषानदेवीयति,
सर्वज्ञीयति मूर्खमुख्यनिवहं तत्त्वज्ञमज्ञीयति।
सन्मार्गीयति जैनमार्गमपथं सम्यक्पथीयत्यहो ?,
मिथ्यात्वप्रहिलो जनः स्वमगुणाग्रण्यं कुवार्गीयति ॥ २२ ॥

व्याख्या—देवी० ॥ 'अहो ?' इत्याश्चर्ये मिथ्यात्वप्रहिलो जनः-मिथ्यात्वेन गर्वीभूतो लोकः, एवं कुरुते, तत्राह-उरुदोषिणः-प्रबलदोषयुक्तान् देवीयति-देवतया मन्यते। अथ क्षतमहादोषान्, क्षताः-(वि)नाशिता महादोषा यैस्तं तान् वीतरागान् भ्रमत्वेन अदवीयति-देवतया नाङ्गीकरोति, पुनः मूर्खमुख्यनिवहं-मूर्खप्रधानसमूहं सर्वज्ञीयति-सर्वज्ञतया मन्यते, तत्त्वज्ञ-तत्त्वज्ञातारम् अज्ञीयति-अज्ञतया मन्यते। जैनमार्गम् मार्गीयति । पुनः अपथ-कुमार्गं सम्यक् पथयति-सुमार्गतया मन्यते। अगुणैरग्रण्यं-निर्गुणप्राधान्यं स्वम्-आत्मानं कुवार्गीयति-गुणवत्तया मन्यते ॥ २२ ॥

सङ्ख्याकृतचैत्यकूटपतितस्यान्तस्तरां ताम्यत,-
स्तन्मुग्धाशयपाशबन्धनवतः शक्तस्य न स्पन्दितुम्।
मुक्त्यै कल्पितदानशीलतपसोऽप्येतत्क्रमस्थायिनः,
सङ्घव्याघ्रवशस्य जन्तुहरिणव्रातस्य मोक्षः कुतः ? ॥ २३ ॥

व्याख्या—सङ्ख्या० ॥ जन्तुहरिणव्रातस्य, जन्तवः-प्राणिनो भव्यास्त एव हरिणाः-मृगास्तेषां व्रात-समूहस्तस्य-भव्यजनमृगसमूहस्य मोक्षः-मुक्तिः कथमपि तु न। कथम्भूतस्य जन्तुहरिणव्रातस्य ? सङ्घव्याघ्रवशस्य, सङ्घ-हीनाचारिसमुदायः, स एव व्याघ्रः-मृगारिस्तद्वशस्य-भक्षीभूतस्य। यथा व्याघ्र-वशस्य हरिणस्य मोक्षः-छुटनं न तथा कुसङ्घव्याघ्रवशस्य भव्यहरिणस्य मुक्तिगमनं न। कथम्भूतस्य जन्तुहरिणव्रातस्य ? सङ्ख्याकृतचैत्यकूटपतितस्य, सङ्घस्य-लिङ्गिसमुदायस्य दानाय कृतानि सङ्घाकृतानि यानि चैत्यानि-जिनभवनानि भावकैर्निर्माप्य लिङ्गिभ्यो दत्तानि, इष 'श्रा' प्रत्ययः,

तान्येव-चैत्यान्येव कूटाः हरिणबन्धनयन्त्राणि तत्र पतितस्यान्यस्य मृगस्य कूटे पतितस्य मोक्षः कष्टेन। पुनः कथम्भूतस्य? तराम्-अत्यर्थम् अन्तः-मध्यहृदये ताम्यतः-खेदं कुर्वतः 'कदाक्षुटिष्येऽह'-मिति खिद्यमानस्य। पुनः कथम्भूतस्य? तन्मुद्राद्वढपाशबन्धनवतः, तस्य कुसङ्गस्य मुद्रा-मर्यादा 'असमक्षेस्य एव समागन्तव्य'-मिति, सैव दृढः-निबिडो यः पाशस्तस्य बन्धनं यस्य स तस्यान्यस्य हरिणस्य दवरिकादिनिर्मितप्रविविडप्र पाशे पतितस्य मोक्षो नेति। पुनः किम्भूतस्य? स्पन्दितु-चलितु न शक्तस्य-अ समर्थस्य। पुनः किम्भूतस्य भव्यजन्तोः? मुक्त्यै-मुक्त्यर्थं कल्पितदानशीलतपसोऽपि, कल्पितम्-आचरितं स्वबुद्ध्या दानं शीलं तपो येन तस्य, यद्यपि तपःप्रभृति मुक्त्यर्थं करोति तथापि न मोक्षः। पुनः कथम्भूतस्य? एतत्क्रमस्थायिनः, एतस्य-कुसङ्गस्य यः क्रमः-परम्परा तत्र स्थायिनः। हरिणपक्षे एतस्य मृगस्य प्रहारार्थं सज्जितः क्रमः-चरणस्तत्र स्थायिनः पादपतितस्येत्यर्थः॥ २३॥॥ इति कुगुरुदशकं व्याख्यातम्॥

पुनरप्याह—

इत्थं मिथ्यापथकथनया तथ्ययाऽपीह कश्चिन्-
मेदं प्रासीदनुचितमको मा कुप्यत्कोऽपि यस्मात्।
जैनभ्रान्त्या कुपथपतितान् प्रेक्ष्य नृस्तत्प्रमोहा,-
पोहायेदं किमपि कृपया कल्पितं जल्पितं च॥ २४॥

व्याख्या-इत्थ०॥ इत्थम्-अमुना प्रकारेण तथ्ययाऽपि-सत्ययाऽपि मिथ्यापथकथनया, मिथ्यापथस्य-हीनाचारिमार्गस्य कथना-प्रकटना तया, इह प्रवचने कश्चिज्जन्तुर्जिनशासनस्थः मा इदं प्रासीत्, यदिदं परदोषोद्घाटनम् अनुचितम्-अयोग्यम्। अथो-अथवा कोऽपि-कश्चिदपि मा कुप्यत्-मा कुप्यतु यत् 'किमनेन रागद्वेषवाक्येने'-ति कोपं-द्वेषं मा करोतु यस्मात्कारणात् जैनभ्रान्त्या-जैनमार्गभ्रमेण कुपथपतितान् कुपथे हीनाचारिप्ररूपिते पतितान् नृन्-नरान् प्रेक्ष्य अथ तत्प्रमोहापोहाय, तेषां-जन्तूनां प्रमोहः-अज्ञानं तस्यापोहः-निराकरणं तस्मै, तन्मोहनिराकरणाय इदं-प्रत्यक्षं किमपि किञ्चिन्मात्रं कृपया-दयया 'अहो! अमी वराकाः कथं भविष्यन्ती?' ति कृपया कल्पितं-प्रोक्तं च-पुनर्जल्पितं-प्रजल्पनया प्रारब्धं न तु रागद्वेषाभ्यामिति॥ २४॥

तत्र कारणमाह—

प्रोद्भूतेऽस्मन्त्कालास्कठिमकलिमये नाम नेपथ्यतोऽर्हन्,
मार्गभ्रान्ति दधानेऽत्र च तदभिमरे तस्ततोऽस्मिन् दुरन्ते।

कारुण्यात् च कुबोध नृषु निरसिसिषुर्दोषसङ्ख्यां विवक्षेत्,
दम्भोऽम्भोधेः प्रमित्सेत् स सकलगगनोल्लङ्घनं वा चिचिरक्षेत् ॥ २५ ॥

व्याख्या-मोहू० ॥ यः पुरुषः अस्मिन् दुरध्वे-कुष्टमार्गे हीनाचारिप्ररूपिते दोषसङ्ख्याम्-इयत्तया दोषपरिमाणं विवक्षेत्-वक्तुमिच्छेत् स पुरुषः अम्भोधेः-समुद्रस्य अम्भः-जलं प्रमित्सेत्-प्रमातुमिच्छेत् वा-अथवा सकलगगनोल्लङ्घनं-समस्ताकाशस्य पद्भ्यामुल्लङ्घनं चिचिरक्षेत्-कर्तुमिच्छेत् । यथा समुद्रमलमानम् आकाशलङ्घनं कर्तुम शक्यं तथा हीनाचारिदोषसङ्ख्या वक्तुं न पार्यत इति । कथम्भूतः ? यः कारुण्यात्-दयातो नृषु-नरेषु कुबोध-कुतत्त्वज्ञान निरसिसिषुः-मक्तुमिच्छुः । कथम्भूते दुरध्वे ? अनन्तकालात्-अनन्तकालेन प्रोद्भूते-संजाते । पुनः किम्भूते ? कलिमलनिलय-पाप स्थाने । पुनः किम्भूते ? नामनपथ्यतः, नाम्ना नेपथ्यं-वेषस्तस्मात् नाममात्रवेष धारकयोरर्हन्मार्गभ्रान्ति दधाने 'अहो ! अमी वेषमात्रधारका अपि साधवः' इति भ्रान्ति विधायके । अथ च-पुनरपि तत्त्वतः-परमार्थतः-तदभिमरे, तस्य-अर्हन्मतस्य अभिमरे-घातके चौरप्राये, यथा चौराः प्रच्छन्नवृत्त्या वेषपरावर्तेन राजादिकं अपि तथा एतेऽपि लिङ्गमात्रधारकत्वेनार्हन्मार्गघातका एवेति ॥ २५ ॥

न सावद्याम्नाया न बकुश-कुशीलोचितयति,
क्रियामुक्ता मुक्ता न मद-ममता-मात्सर्ययैः ।
न संक्लेशावेशा न कदभिनिवेशा न कपट,-
प्रिया ये तेऽद्यापि स्युरिह यतयः सूत्ररुचयः ॥ २६ ॥

व्याख्या-न सा० ॥ ते अद्यापि-साम्प्रतमपि इह-जिनशासने यतयः-साधवः स्युः च एवंविधाः । किम्भूताः ? न सावद्याम्नायाः, सावद्या-सपापः आधाकर्म-भोजनादिरूपम् आम्नायः-परम्परा येषां ते तथा चैत्यवासाद्याम्नायवन्तो च नैस्यप्यः । पुनः किम्भूताः ? बकुशकुशीलोचितयति-क्रियामुक्ता न, बकुश-शबलम् अतिचारपङ्केन चारित्रं येषां ते बकुशाः, कुत्सितं शीलं-चरणं येषां ते कुशीलाः, तयोरुचिता-योग्या या यतिक्रिया-साधुसामाचारी तया मुक्ता-वियुक्ता न ये तादृशू बकुशकुशीलक्रियावन्तस्ते अधुना सुसाधव एव, "बकुशकुशीले हिं पवयपरिसित्य" इतिवचनात् । अत्र पञ्च निर्ग्रन्थाः-बकुश-कुशील-पुलाक-निर्ग्रन्थ-स्नातकभेदात् । बकुशा द्विविधा उपकरण-देहभेदात् । ये वर्षे प्रस्पासत्तिमन्तरणापि कदाचित् वस्त्रादिकं धावति सस्या र्धक्कादि विभूषन्ति, कदाचिस्परिदधते, पात्रदण्डकाद्यपि घृष्टेलादिभक्ष्योत्पादित

वैमस्क च धारयन्ति, उपकरणमप्यतिरिक्तं चार्थयन्ते ते उपकरणबकुशाः । ये कारणं नखादीन् कदाचिन्निमित्तं भूषयन्ति ते देहबकुशाः । इमे द्विविधा अपि शिष्यादि परिवारादिकां विभूतिं तपःपाण्डित्यादिप्रभवं च यशः प्रार्थयन्ते, प्रमोदन्ते छेदार्हैश्चाति चारैर्बहुभिः शबलिता अपि कर्मक्षयार्थमुद्यता इत्यादि । कुशीलो द्विविधः आसेवना कषायभेदात्, ये ज्ञानदर्शनचारित्रतपांसि किञ्चिदुपजीवन्ति ते आसेवनाकुशीलाः, ये क्रोधादिभिः कषायैः-ज्ञानादिगुणान् विराधयन्ति ते कषायकुशीलाः मूलोत्तरगुणविराधकाश्च पञ्चनिर्ग्रन्थमध्ये केऽपि । पञ्चानां विस्तरतः स्वरूपं श्री भगवतीसूत्रादिभ्यश्च ज्ञेयम् । ननु ये एवं शिथिलक्रियायुक्ताः कर्तितकेशा उपकरणधारकाः मूलोत्तरगुणविराधकास्ते निर्ग्रन्थाः कथं तेषां स्वरूपं केन प्रकारेण ? इति चेदुच्यते-एतेषां कर्तव्यता तावत् प्रवाह मार्गेण नास्ति किन्तु कदाचिन्महति कारणे जाते धावनादिका क्रिया, इति, मूलगुण विराधनं च मनश्च विराधनादिप्रकारेणेति रहस्यं सदा तत्कर्तव्यता नास्तीति ॥ पुनः किम्भूताः ? मदममताजीवनभयैः, मदो-गर्वः, ममता-प्रतिबन्धः, आजीवनभय मिथाया जीविकाभयं, तैर्मदममताजीवनभयैः न युक्ताः-न स्पृष्टाः । पुनः किम्भूताः ? न संक्लेशस्य-रौद्राध्यवसायस्य आवेशः-उत्कर्षो येषां ते न संक्लेशावेशाः । पुनर्न कद भिनिवेशाः, कत्-कुत्सितः अभिनिवेशः-कदाग्रहो येषां ते, तथा कपटप्रियाः-माया वल्लभा न पुनः किम्भूताः ? सूत्ररतयः सूत्रे रतिर्येषां ते सूत्ररतयः-सिद्धान्तरुचयः ॥१६॥

संविग्नाः सोपदेशाः श्रुतनिकषविदः क्षेत्रकालाद्यपेक्ष्या,-
ऽनुष्ठानाः शुद्धमार्गप्रकटनपटवः प्रास्तमिथ्याप्रवादाः ।
धन्याः सत्साधवोऽस्मिन्नियम-शम-दमौचित्य-गाम्भीर्य-धैर्य,-
स्थैर्यौदार्यार्यचर्याविनय-नय-दया-दाक्ष्य-दाक्षिण्यपुण्याः ॥ १७ ॥

व्याख्या-संविग्नाः० ॥ अस्मिन्-जिनशासने एवम्भूताः सत्साधवः-शोभन-साधवो धन्याः । किम्भूताः ? संविग्नाः-मोक्षाभिलाषुकाः । पुनः किम्भूताः ? सोपदेशाः, सह उपदेशेन-धर्मोपदेशेन वर्तन्ते ये ते सोपदेशाः । पुनः किम्भूताः ? श्रुतनिकषविदः-श्रुतमेव-शास्त्रमेव निकषः-कषपट्टस्तद्विदः-आगमरहस्यनिपुणाः । पुनः किम्भूताः ? क्षेत्रकालाद्यपेक्ष्यानुष्ठानाः,क्षेत्र-कालाद्यपेक्ष्य-क्षेत्रकालाद्यनुसारि, आदि शब्दाच्छरीरबलादिग्रहः, अनुष्ठानं-कर्तव्यता येषां ते द्रव्यक्षेत्रकालभावानपेक्ष्य क्रिया कर्त्तार इति । पुनः किम्भूताः ? शुद्धमार्गप्रकटनपटवः, शुद्धमार्गस्य प्रकटने पटवः-सावधानाः । पुनः किम्भूताः ? प्रास्तः-दूरीकृतः मिथ्याप्रवादो यैस्ते प्रास्तमिथ्या

प्रवादाः । पुनः किम्भूताः ? नियम, नियम–अभिग्रहः, शमः–उपशमः, दमः–इन्द्रियजयः, औचित्य–योग्यता, गाम्भीर्यम्–अलक्ष्यविकारत्व, धैर्य–धीरत्व, स्थैर्य–विमृश्यकारित्वम्, औदार्यम्–उदारत्वम् आर्यचर्या–सत्पुरुषप्रवृत्तिः, विनयः–अभ्युत्थानादिः, नयः–न्यायः, दया–कृपा, दक्ष्य–धर्मक्रियाऽनालस्य, दाक्षिण्यं–सरलता, एभिर्गुणैः पुण्याः–पवित्राः ॥ १७ ॥

स्वनामगर्भितकाव्यमाह—

जिष्णुजिष्णुमगर्वमस्मरममाशादं शुभोद्यद्वने,
सज्ज्ञानद्युमणिं जिनं वरवपुः–श्रीचन्द्रिकामेचरम् ।
वन्दे वर्ण्यमनेकधाऽसुरनरैः, शक्रेण चैनश्छिदं,
दम्भारिं विदुषां सदा सुवचसाऽनेकान्तरङ्गप्रदम् ॥ १८ ॥

व्याख्या–जिष्णु० ॥ जिन–तीर्थंकरं वन्दे । किम्भूत जिन ? जिष्णुजिष्णुम्–अतिशयैः शोभायमानम् । पुनः अगर्वम्–अहङ्काररहितम् । पुनः अस्मरं–कन्दर्परहितम् । पुनः किम्भूत ? शुभोद्यद्वने–सिद्धान्ताराधाऽतिक्रमे अनाशादम्, आशां–मनोरथ ददातीति आशादः, न आशादोऽनाशादस्तम् । पुनः किम्भूतं ? सज्ज्ञानद्युमणिं, सज्ज्ञानेन प्रधान केवलज्ञानेन द्युमणिं–सूर्यम् । पुनः किम्भूतं ? वरा–प्रधाना वपुःश्रीः–शरीरकान्तिः सैव चन्द्रिका–ज्योत्स्ना तया मेचरं–नक्षत्रनाथ चन्द्रम् । असुरनरैः–दानवमानवैः शक्रेण–इन्द्रेण अनेकधा–अनेकप्रकारेण वर्ण्य–वर्णनीयम् । पुनः एनश्छिदम्, एनः–पापं छिनत्तीति पापच्छेदकमित्यर्थः । पुनः दम्भारिं, दम्भस्य–कपटस्य अरिः–वैरी दम्भारिस्तम् । पुनः विदुषां–पण्डितानां सदा–निरन्तरं सुवचसा–सुवाक्येन अनेकान्तरङ्गप्रदम्, अनेकान्त –स्याद्वादस्तस्य रङ्गस्त प्रददातीति अनेकान्तरङ्गप्रदस्तम् । वचनेन भगवान् स्याद्वादस्वं प्ररूपयन्तीति । चक्रमापसर्ग, यथा माघकाव्ये चक्रबन्धतया वर्तते तथाऽत्र चक्रमापतुल्यं चक्रबन्धे 'जिनपद्मभेन गणिनेदं चक्रे' इति नाम वर्तते । चक्रस्थापना प्रसिद्धैव ॥ १८ ॥

जिनपतिमतधुर्ये कालतः साधुवेदे,–
विपथिभिरभिभूते भस्मकर्मोऽच्छलेभ्यैः ।
स्वपरसमयभानां शुद्धतेव स्वगच्छे,
स्थितिरियममुना तैरप्यमि स्वार्थमिद्धो ॥ १९ ॥

व्याख्या—जिनपति० ॥ तैः–चैत्यवासिभिः इव स्वमच्छकलिवतिः–स्वमच्छ मर्यादा अधुना–साम्प्रतम् अप्रथि–विस्तारिता । कस्यै ? स्वार्थसिद्ध्यै–स्वोदरभरणप्रयोजनाय । कथम्भूता ? स्वमत्सरवचनानां, स्वमताः–आत्मवशा ये जडाः–मूर्खाः जनाः–लोकास्तेषां मुद्रुला इव 'अस्मान् विमुच्य नान्यत्र गन्तव्यम्' एवं मुद्रका । क सति ? साधुवेषैः–साधुवेषमात्रधारकैस्तैरेव कालतः पञ्चमारकात् जिनपतिमतदुर्गैः अभिभूते–पराभूते, जिनपतेः–तीर्थंकरस्य मत–शासनं तदेव दुर्गः–कोट्टविशेषस्तस्मिन् । कथम्भूतैः ? विपर्ययिभिः–विपर्ययसेवकैः । पुनः किम्भूतैः ? भस्मकम्लेच्छसैन्यैः, भस्मकः–भस्मग्रह एव म्लेच्छः–तुरुष्काधिपतिस्तस्य सैन्याः सैन्यस्वरूपास्ते, यथा तुरुष्काधिपतेः सैन्यं भवति तथा भस्मकस्यैते सैन्या इति ॥ ३९ ॥

सम्प्रत्यप्रतिमे कुसङ्घवपुषि प्रोज्जृम्भिते भस्मक–
म्लेच्छातुच्छबले दुरन्तदशमाश्चर्ये च विस्फूर्जिते ।
प्रौढिं बिभ्रुषि मोहराजकटके लोकैस्तदाज्ञापरै–
रेकीभूय सदागमस्य कथयाऽपीर्ष्या कदर्थ्यामहे ॥ ४० ॥

॥ इति श्रीसङ्घपट्टकसूत्रं सम्पूर्णम् ॥

व्याख्या—सम्प्र० ॥ लोकैर्वयम् इत्थम्–अमुना प्रकारेण कदर्थ्यामहे । कया ? सदागमस्य कथयाऽपि, सन्–प्रधानः आगमः–सिद्धान्तस्तस्य सदागमस्य कथयाऽपि–कथनेनापि । यदा शुद्धमार्गस्य कथाऽपि क्रियते तदा लोकाः कदर्थनां कुर्वन्तीति । क सति ? सम्प्रति–अधुना भस्मकम्लेच्छातुच्छबले प्रोज्जृम्भिते, भस्मकः–भस्मग्रहः, स एव म्लेच्छः–तुरुष्काधिपतिस्तस्य अतुच्छं–प्रचुरं बलं तस्मिन् प्रोज्जृम्भिते–प्रौढीभूते सति । कथम्भूते बले ? अप्रतिमे–महातेजस्विनि, पुनः कथम्भूते ? कुसङ्घ–वपुषि, कुसङ्घः–हीनाचारिसङ्घ एव वपुः–शरीरं यस्य स तस्मिन् प्रत्यक्षतो दृश्यमानकुसङ्घशरीरे च–पुनः दुरन्तदशमाश्चर्ये–दुष्टासंयतपूजालक्षणदशमाश्चर्ये विस्फूर्जिते–प्रकटीभूते सति । कथितवत्ता दशमाश्चर्यस्य पञ्चमारके प्रादुर्भावः । पुनः मोहराजकटके–मोहनीयकर्मरूपराजसैन्ये प्रौढिं–विस्तारत्व बिभ्रुषि–धारयति । भस्मकग्रहचैत्यवास्यादयः सर्वेऽपि मोहनीयसैन्यरूपा एव । किं कृत्वा कदर्थ्यामहे ? एकीभूय–एकपक्षतां कृत्वा । कथम्भूतैर्लोकैः ? तदाज्ञापरैः, तस्य–मोहराजस्य आज्ञा, तत्र पराः–सावधानास्तैः–मोहाज्ञा प्रवर्तिभिः । संसाररूपनगरे मोहराजो दुस्सङ्घस्तस्य सैन्य–भस्मग्रहो महासामन्तो दशमाश्चर्यं द्वितीयः सामन्त इति रहस्यमिति काव्यार्थः ॥ ४० ॥

### ग्रन्थकारप्रशस्तिः

श्रीमत्खरतरगच्छे श्रीमज्जिनभद्रसूरिशाखायाम् ।
श्रीपद्ममेरुसुगुरु—र्व्यवहार्यस्मपुरं सूरि च ॥ १ ॥

तच्छिष्यो वाचकपतिरिह, श्रीमन्मतिवर्द्धनो गुरुर्जीयात् ।
श्रीमेरुतिलकनामा, तत्प्रायमकल्पिकः समभूत् ॥ २ ॥

तच्छिष्यौ प्रवरगुणौ, दयाकलशसद्गुणिप्रभाद्युमणिम् ।
अमरमाणिक्यसुगुरुः, समस्तसिद्धान्तवारीशः ॥ ३ ॥

तच्छिष्येण सुविहिता, सुगमेयं साधुकीर्तिगणिनाऽपि ।
एकोनविंशेसमधिक,—षोडशसंवत्सरे प्रवरे ॥ ४ ॥

माघमासे शुक्लपक्षे, पञ्चम्यां प्रवरयोगपूर्णायाम् ।
विबुधैः प्रपठ्यमाना, समस्तसुखदायिनी भवतु ॥ ५ ॥

॥ इति श्रीजिनवल्लभसूरिकृत—सङ्घपट्टकावचूरि सम्पूर्णा ॥



कविचक्रवर्त्ति श्रीजिनवल्लभसूरिभिर्विरचितः पण्डितलक्ष्मीसेनविहितया लघ्वर्था-
भिधया लघुवृत्त्यासमेतः ।

# सङ्घपट्टकः

इन्दीवरप्रभमनिन्दितकान्तिशालि-
धामार्चितं सुरवरैः किल वासवाद्यैः ॥
श्रीमज्जिनेश्वरचरणं शरणाय सद्यः ।
सर्वोत्तमा नमत किं कुरुतान्य चिन्ताम् ॥ १ ॥

गम्भीरार्थेष्वेकैकसत्सद्ग्रन्थैः श्रीसंघपट्टमिव,–
ग्रन्थस्यास्य यथामति प्रकुरुते टीकां लघ्वर्थाभिधाम् ।
लक्ष्मीसेनसुधीः सुधीरनिवह प्रीत्यै जिनेशप्रभोः
पादाम्भो–जैनकल्प सन्मति रति श्रीमान् हमीरात्मजः ॥ २ ॥

तत्र तावदाद्यश्लोकार्थविवेचनमारभ्यते—

वह्निज्वालावलीढ कुपथमथनधीर्मातुरग्रेऽखिललोक ॥ १ ॥

व्याख्या—'वह्नि'रिति–तं देवं–पार्श्वनाथं वयं स्तुमः–प्रणमामः । तं कं ? यो देवः इति जगादेव–उक्तवानिव इति, किं ? प्राज्ञैः–पण्डितैः सद्यः–तत्क्षणादेव कुमार्ग-स्खलनं कार्यं–कर्तव्यं, सिद्धान्तविरुद्धमतनिराकरणं कर्तव्य–मित्यर्थः । किं कृत्वा ? स्वस्य आत्मनः विधुरमपि प्रपद्य । अपि सम्भावने कोऽर्थः ? कुमार्गस्खलनाद् यदि आत्मनो विधुरमपि किञ्चिद् भवति तथापि इति । किं कुर्वन् उक्तवान् ? कमठमुनितपः उच्चैः–अतिशयेन दुष्टं प्रकटयन्–प्रकटीं कुर्वन् । कोऽर्थः ? कमठनामतापसस्तावदेकः कश्चि तपस्वी पञ्चाग्नि नाम तपः कुर्वन् पार्श्वनाथेनावलोकित, तस्य तत् तपो भगवता दुष्टं कृत मित्यर्थः ॥ किं कृत्वा ? अखिललोकस्याग्रे ज्वलत्काष्ठमध्यात्सर्पं सन्दर्श्य, न केवलं अखिल लोकस्याग्रे मातुर्वामदेव्याश्चाग्रे वामादेवी भगवन्माता, तस्या अपि पुरतः इत्यर्थः किं विशिष्टं नागं ? " अग्निज्वालावलीढ " अग्निशिखाकवलित–अर्द्धदग्ध मित्यर्थः कथम्भूतो यः परमेश्वरः ? कुमार्गछेदनबुद्धियुक्तः । पुनः कथम्भूतः ? कारुण्याम्बुवाम्भिः–कृपा पीयूषसागरः ॥ १ ॥

श्रीउपदेशश्रवणयोग्य श्रोतारं निरूपितुमाह—

कल्याणाभिनिवेशवानिति गुणग्राहीति मिथ्यापथः.. ॥ २ ॥

व्याख्या—कल्याणाभि०—श्रोतुर्णां चतुर्दशगुणाः, श्रोतृशब्दाः सर्वेऽप्यत्र हेत्वर्थाः। अथ श्लोकान्वय —भो श्रोतः! मया ग्रन्थकर्त्रा त्वमुच्यसे—कथ्यसे कथमिति? कल्याणाभिनिवेशवानिति, कोऽर्थः शुभरूपाग्रहवान् शोभनस्य रूपस्य आग्रहो विद्यते अस्येति स तथा। पुनः कथमिति? गुणग्राहीति गुणग्रहीतु शीलमस्येति गुणग्राही। पुनः कथमिति? मिथ्यापथप्रत्यर्थीति यथा—छन्दः प्ररूपितोत्सूत्रमार्गस्तस्य विरोधी, पुनः कथमिति? विनीत इति प्रशुस्वभाव इति, अर्थात् गुर्वादिषु। पुनः कथमिति अशठ इति अधूर्त इति। पुनः कथमिति? औचित्यकारीति—उचितस्य भाव औचित्य, तत् कर्तुं शीलमस्येति। पुनः कथमिति? दाक्षिण्यीति दाक्षि–ण्ययुक्तः। पुन, कथमिति? दमीति—जितेन्द्रियः, पुनः कथमिति? नीतिमुदिति—नीतिं बिभर्तीति नीतिभृत्–सदाचारपरायण इत्यर्थः पुनः कथमिति? स्थैर्यीति—स्थैर्यगुणयुक्तः स्थिर इत्यर्थः। पुनः कथमिति? धैर्यीति—धीर इत्यर्थः। पुनः कथमिति? सद्धर्मार्थीति—सतां धर्मः सद्धर्म तस्यार्थः, सोऽस्यास्तीति शोभनधर्मगवेषकः। पुनः कथमिति? विवेकवानिति—युक्तायुक्तविचारचतुरः इत्यर्थः। पुनः कथमिति? सुधीरिति प्राज्ञ इत्यर्थः ॥ २ ॥

इदानीं युग्मश्लोकयो–र्व्याख्यानमारभ्यते—

इह किल कलिकालव्यालवक्त्रान्तराल.. ॥ ३ ॥
मोऽस्तर्ध्वंद् भवभरासिमहसजसमाश्रयमाप्राप्यपुण्य.. ॥ ४ ॥

व्याख्या—इह० ॥ भो० ॥ " किलेति " प्रसिद्धिः इह जगति विपथिभिः सकृपचन्दनवनिताविदिसेविभिः अभितः—समन्तात्। सोय यथा अभ्यर्थि—प्रार्थितः—कथा पितः। कथम्भूतः यथा? जिनोक्तिप्रत्यर्थी—जैनशास्त्रविरोधी, कस्मिन् सति? प्राणिवर्गे जीवसमूहे जैनन्द्रमार्गे—जिनशासने विरलतां—तुच्छतां याति सति, कथम्भूते प्राणिवर्गे? कलिकालव्यालवक्त्रान्तरालस्थितिजुषि। कलिकाल एव व्यालः—सर्पस्तस्य वक्त्र तस्यान्तराल—मध्य तत्र स्थितिः—स्थान, तत् जुषत सेवते यः तस्मिन्। पुनः कथम्भूते प्राणिवर्गे? गततत्त्वप्रीतिनीतिप्रचारे। गतौ—नष्टौ तत्त्वप्रीतिर्नीतिप्रचारौ यस्य तस्मिन्, इदानीं प्राणिवर्गे तत्त्वप्रीतिर्नास्ति। नीते प्रचारो व्यवहारश्च नास्तीत्यर्थः।

पुनः कथम्भूते ? प्रसरदनवबोधे–प्रादुर्भवत् सम्यक्सिद्धान्तापरिज्ञान, कोऽर्थः ? सिद्धांतार्थसम्यग्ज्ञानरहिते । पुनः कथम्भूते ? प्रस्फुरत् कापथोधरथमितसुमति-सर्गे उन्मीलन्त्वः–प्रकटी भवतः ये कुमार्गाः–कुत्सितमार्गाः ते स्थगितः–तिरस्कृतो रुद्धः–अपवर्गलक्षणायाः सुगतेः सर्गो–निष्पत्तिर्यस्य तस्मिन् । कथम्भूतैः साधुवेषैः विषयिभिः ? संक्लिष्टविष्टसमसलजनजनाम्नायरक्तैः । कोऽर्थः ? समानधर्मजनो पलापकारि–मत्सरि–हेयोपादेयविमर्शशून्यप्रकर्षपिशुनः दुर्बुद्धिचतुर्विध संघः, तस्या म्नायः–शिष्यप्रशिष्यादिसंतानः, तत्र रक्तः–प्रीतिमतः, तैः । पुनः कथम्भूतैः ? साधुवेषैः–सन्मुनिचिह्नधारिभिः कथम्भूते जैनेन्द्रमार्गे ? 'प्रोत्सर्प' इत्यादि प्रोज्जृम्भ माणो यो भस्मराशिनामा क्रूरग्रहः, तस्य सखा–मित्रम्, असयतपूजाख्यं रिपुविजय पुरःसरं आश्चर्यं वर्द्धमान अतस्मे तत्त्वप्रतिपद्यमानरूप यद् दशमाश्चर्यं तस्य साम्रा ज्येन–प्राचुर्येण पुष्यन्–प्रादुर्भवन् मिथ्यात्व, तदेव ध्वांत–तमिस्र तेन व्याप्ते । अन्योऽपि मार्गो यथान्धकारावृतो भवति तदोच्छन्नतां यात्येव ॥ १–४ ॥

इदानीं योग्यस्य श्रोतुः पुरतो दुर्जनकल्पिते पथि दशभिर्द्वारैस्तत्र निरूपितं धर्मं प्रतिपादयन् तस्य धर्मस्य कर्मनिर्मूलन सामर्थ्यमसंभावयन्नाह—

यत्रौद्देशिकभोजनं जिनगृहे वासो वसत्यक्षमा... ॥ ५ ॥

व्याख्या—" यत्रौ० " यस्मिन् मार्गे औद्देशिकभोजनं, कोऽर्थः ? यतीन् मनसि कृत्वा निष्पादितं, जिनगृहे वासः–अर्हद्भवने सर्वदा निवासः, वसत्यक्षमा–गृहस्थ गृहे वासं प्रति मात्सर्यम्, अर्थं गृहस्थचैत्यसदनेषु स्वीकारः–द्रव्यश्रावकजिनगृहेषु अङ्गीकारः, अप्रेक्षितासनं–स्वचक्षुषा अदृष्ट–आसनम्, सावद्याचरितादरः–सपापे यदाचरितं, तस्यादरः, श्रुतपथावज्ञा–सिद्धान्तमार्गस्यानादरः, गुणिद्वेषधीः–यतिषु द्वेषबुद्धिः, इति दशद्वाराणि । एतैर्दशद्वारैः प्ररूपितो धर्मः । अत्र–असाधुकल्पिते पथि कर्म्महरोभवेद् भवेत्–कर्मक्षयकारी भवेत् तदा अब्धौ–समुद्रे मेरुस्तरेत् । यदा मेरुः समुद्रे तरति तदा एतस्माद् धर्म्मात् मोक्षो भवतीत्यर्थः ॥ ५ ॥

साम्प्रतमेतेषामेव दशद्वाराणां यथाक्रमं प्रत्याख्याने चिकीर्षुः प्रथम सामग्रीमोप मर्ददोषदृष्टया औद्देशिकभोजनद्वारं निषेद्धुमाह—

षट्कायान् उपमर्द्य निर्दयमृषीनाधाय यत् साधितं...॥ ६ ॥

व्याख्या—षट्कायामुपम० । नामेति संभावनायाम्, इह–प्रवचने सघृणो–दयालुः कः तद् भोजन भोक्तुमिच्छति ? अपितु न कोऽपि–इत्यर्थः । किं कुर्वन् ? सद्भादिनिमित्तमेतन्निष्पन्नमिति जानन् । किं तद्भोजनं यत् षट्कायान्–षड्विधजीवनिकायान् उपमर्द्य–हत्वा निर्दयं यथा स्यात्, एवम् ऋषीन्–यतीन् आदाय–मनसि कृत्वा पत् साधित निष्पादित यद् भोजनम् असकृत्–वारं वारं शास्त्रेषु प्रतिषिध्यते–निवार्यते निशीथादिग्रन्थेषु यस्य निषेधो वर्तते, तद् भोजनं निस्त्रिंशताधायि निष्करुणताकारकम् । पुनः यद् भोजन पण्डिताः गोमांसाद्युपमम् आहुः–गोमांसादिसदृशं कथयंति मूलादि । यद् भोजन भुक्त्वा यतिरधोयाति–नरकं गच्छति तद् भोजनं प्राज्ञः कोऽपि न भोक्तुमिच्छति–इत्यर्थः ॥ ६ ॥

प्रथमं तावत् भोजनद्वारं निषेध्य जिनगृहनिवासं निषेधयितुमाह—

गायद् गन्धर्वेत्यादि पणरमणिरणद् वेणुगुञ्जन्मृदङ्ग ॥ ७ ॥

व्याख्या—" गायद् गन्धर्व०" खलु इति निश्चये अर्हन्तमतज्ञाः–जिनशास्त्रनिपुणाः सन्तः जिनगृहे न वसन्ति–न सततमवतिष्ठन्ते । कुतः ? विकारहेतुत्वात् । किं विशिष्टाः सन्तः ? त्रसन्तः, कस्याः ? देवद्रव्योपभोगध्रुवमठपतिताऽऽशातनाभ्यः । देवद्रव्यस्य जिननैवेद्यादेः उपभोगः, सतत शयनं, भोजनादिकरणे उपभोगः, ध्रुव–निश्चय मठपतिता–मठाधिपत्य, तथा भगवदाशातनाः–जिनानां चतुरशीतिराशातनाः, एतेभ्यः बिभ्यन्तः । कथम्भूते जिनगृहे ? ' गायद् गन्धर्वे 'त्यादि, गायन्तः गन्धर्वाः प्रधानगायनाः यत्र नृत्यन्त्यः पणरमण्यो–वेश्या यत्र, रणन्तो–मधुरं ध्वनन्तो वेणवो–वंशाः यत्र, गुञ्जन्तो गम्भीरं स्वनन्तो मृदङ्गा प्रेङ्खन्त्योलम्बमानाः पुष्पस्रजः–पुष्पमाला यत्र, उद्यत्–सर्वतः प्रसरत् आमोदद्वारेण मृगमदः–कस्तूरिका यत्र, लसन्त्यः–पट्टांशुकमयवस्त्रादीप्यमाना उल्लोचानि–वितानानि यत्र, महाघनवसनभूषणाङ्गरागादि भूषितशरीरत्वात् शोभमाना मनीषाः–श्रावकसमूहा यत्र, तस्मिन् ॥ ७ ॥

वसत्यधमाद्वारं निरसितुं श्लोकद्वयेनाह—

साक्षाज्जिनैर्गणधरैश्च निषेधितोच्चं ॥ ८ ॥

चित्रोत्सर्गापवादे भवित सिवपुरीदूतभूते निशीथे ॥ ९ ॥

व्याख्या—साक्षा० सकर्ण –सश्रवणः कः पुमान् परगृहे–गृहस्थगृहे वसति–

निवासं विद्वेष्टि । अकर्णः पुमान् कर्णौ विना सिद्धान्तोक्तामपि परगृहवसतिम्–अनात्मवेद्य निषेधेदपि । यः पुनः सकर्णः–भवभः स परगृहवसतिं यतीनामनुमोदयत्येव, न तु द्वेष्टि । किं कुर्वन् ? मुनिपुङ्गवानां–यतिश्रेष्ठानां अनगारपदं जानन्–न विद्यते अगारो यस्येति जानन् । अथवा किं विशिष्टां वसतिं ? 'शय्यातरोक्ति'मिति, शय्या वसतिरा स्पाता यतिभ्यो दानतया, तरति भवाम्भोधिं यया अनगारपदं शास्त्रे हि यतिवाच कत्वेन प्रतिपद श्रूयते । ननु स्वगृह एव किमिति यतयो न वसति ? तत्राह–मुनिपुङ्गवानां निःसंगता–स्वजनादि रहितस्य अभिमपदं–मुख्यस्थानम् । किंविशिष्टा निःसंगता ? साक्षात्–प्रत्यक्ष जिनैः–तीर्थंकरैः निषेविता–उपभुक्ता, स्वमुखेन उक्ता च कथिता, न केवल जिनैर्गणधरैश्च–गौतमप्रभृतिभिः । यतीनां स्वगृहं नास्त्येव, अतः परगृहवसतिरेव श्रेयसीत्यर्थः ॥ ८ ॥

व्याख्या—'चित्रोत्सर्गो॰' सर्वत्र–सर्वस्मिन् वसति अधिकारे आगारधाम्नि–गृहस्य गृह एव यतीनां निवासो न्ययामि, कोऽर्थः ? व्यवस्थापितः, न तु क्वापि–कस्मि न्नपि ग्रन्थे, चैत्ये–जिनगृहे निवासो निरूपितः । किं कृत्वा ? प्रागुक्त्वा–प्रथमं निशीथे सूरिभेदाः–बहुभेदाः वसतीः उक्त्वा । किं विशिष्टे निशीथे ? चित्रोत्सर्गापवादे । चित्रौ–नानाविधौ बहुप्रकारौ उत्सर्गापवादौ–सामान्यविधि–विशेषविधी यस्मिन् । पुनः कथम्भूते निशीथे ? चित्रपुरीषमूत्रे–मुक्तपुरीसन्देशहरसरक्षे । पुनः किं कृत्वा ? पश्चात्–तदनन्तरं कारणेऽपोद्य–अपवादविषयीकृत्य । किं विशिष्टे अगारधाम्नि ? स्त्रीसंसक्त्यादि युक्तेऽपि–स्त्रीपण्डकादिसहितेऽपि । ननु विकारसामग्रीसहिते गृहस्थ–गृहे कथं यतीनां निवासः ? इत्याह—अभिहितयतनाकारिणामिति–निशीथोक्तयतना सावधानानां संयतानां किं विकारहेतुभिरित्यर्थः ॥ ९ ॥

ननु एव यतना सावधानानां चैत्यवासेऽपि को दोषः ? इत्यतः आह—

प्रव्रज्यापरिपंथिनं ननु धनस्वीकारमाहुर्जिनाः ॥ १० ॥

व्याख्या—"प्रव्रज्या॰" ननु निश्चितं तीर्थंकराः धनस्वीकारं–द्रव्यस्याङ्गीकारं प्रव्रज्यापरिपंथिनमाहुः ॥ कोऽर्थः ? दीक्षायाशत्रुभूत कथयन्ति स्म । क धनसंग्रहः ? क दीक्षेतिद्वारम् । तु पुनः सर्वारंभ–परिग्रह–सकलपापसहितानां गृहिष । परिग्रहं अति महासावद्य अतिशयमहासपापं आपद्यते–कदर्थयति । तेन गृहस्थपरिग्रह, सर्वथा यतीनां नोचित इति द्वारम् । चैत्यस्वीकरणे तु माठपत्यमेव स्यात् । यदा यतीनां जिनगृहस्य

स्वीकारास्तदा मठाधिपस्यमेव भवेत् । कथम्भूत माठपत्यम् गर्हिततम-प्रकर्षेण निन्दित । यद्वा इति हेतोर्ऐक्यर्थिनां पुंसाम् इति ममता युक्ता न-द्रव्यादिषु ममत्वं युक्तं नेत्यर्थः । कथम्भूता ममता ? व्रतवैरिणी चारित्रशत्रुभूता ॥ १० ॥

तत्र दशद्वाराणां मध्ये षड् द्वारा निषेध्य अवशिष्टद्वारचतुष्टय निषेधयितुमाह श्लोक चतुष्टयेन—

भवति नियतमत्रासंयमः स्याद् विभूषा ॥ ११ ॥

गृही नियतगच्छभाग् जिनगृहेऽधिकारो यतेः ॥ १२ ॥

निर्वाहार्थिनमुज्झित गुणकवैरजालशीलाम्बयं ॥ १३ ॥

दुष्यापा गुरुकर्मसंचयवतां सद्धर्मबुद्धिर्गुणा ॥ १४ ॥

व्याख्या—अत्र श्लोके सप्तम द्वारं गन्दिकायासने निषिध्यते । अत्र गन्दिका यासने विभूषा स्यात्-शोभा भवेत् । न केवलं शोभा, असंयमश्च भवति । कोऽर्थः ? जीवरक्षाऽभावश्च भवति नियत-सर्वदा गन्दिकायासने कथ शोभा भवेत् ? तत्राह-"नृपतिककुद" एतदिति, यतः एतदासन नृपतिककुद-राज्यचिह्नमिति । तर्हि शोभाऽप्य भीष्टैवेत्याह-लोकहासमेति गन्दिकायासने भिक्षोः केवलं शोभैव न भवति किन्तु लोके यहासश्च भवति-' अहो ! भिक्षोपजीविनो मुण्डिता अपि एवंविधेष्वासनेषूपविशन्ति ' । इह संगः लोकविदितः गन्दिकासौ परिग्रहः, उच्चैः-अतिशयेन सातशीलत्वं-सुख लोलुपता, इति हेतो मुमुक्षोः मोक्षाभिलाषिणः पुरुषस्य गन्दिकायासनं संगत न-युक्त नेत्यर्थः । इति सप्तम द्वारम् ॥ ११ ॥

सावद्याचरितावराकमष्टम द्वारं निरूपयन्नाह—

व्याख्या—' गृही नियतगच्छ० ' गतानुगतिकैः-गड्डरिकाप्रवाहरूपैः अन गारिणां-यतीनाम् असंस्तुतम्-अनुचितम्, अतः-एतत् कथ प्रस्तुतं-प्रारब्धम् । एतत् किं ? गृही-श्रावको नियतगच्छभाग् भवति, कोऽर्थः ? आत्मसत्कोऽस्ति गच्छो येषाम् तेषा मेव समुदाय भजनेन गुणदोषादिक विचारयति अन्य यतेः मुनेः जिनगृहे अधिकारः एतदपि विरुद्ध-मेव, अपरं च आरंभिभिः-गृहिभिः साधुषु-यतिषु यथा तथा, कोऽर्थः ? येनैव प्रकारेण तेनैव अशुद्धमपि अशनादि-भक्तपानादिप्रदेय-वितरणीयम् । एतदपि विरुद्धमेव । अपरं च व्रतादिविधिचारणं-मर्मविरत्यादिविधेर्धारण-निषेधः । एतदपि विरुद्धम् । सुविहितान्तिके-सन्तिके-स मुनिसमीपे कथ प्रारब्धमित्यर्थः ॥ अष्टम द्वारम् ॥ १२ ॥

नवम द्वारं निक्षेपयितुमाह—

व्याख्या—मिथ्या० जनाः-लोकाः यत् ईदृशं यतिं देवेभ्योऽपि-जिनेभ्योऽपि अधिकं यथा स्यात् तथा अर्चयन्ति-पूजयन्ति तत् महतः-प्रबलस्य मोहस्य-अज्ञानस्य जृम्भित-लीलायित। कीदृशं यतिं ? निर्वाहार्थिनं, कथं ? निर्वाहो-जीविका भक्तादिस्तम् एवार्थः प्रयोजनं यस्य तम्। पुनः कीदृशं ? गुणलवैः-गुणलेशैरपि उज्झित-त्यक्तम्। पुनः कथम्भूतं ? अज्ञातशीलान्वयं अविदिताचारकुलं पुनः कथम्भूतं गुरुणा-आचार्येण स्वार्थाय-प्रयोजनाय मुण्डीकृत-दीक्षां नीतम्। कथम्भूतेन गुरुणा ? तादृग्गुणयुक्त गुणेन-तादृग्शिष्यवञ्चनजातेन तद्गुणेन-शिष्यसङ्ग्रहगुणेन। किंविशिष्टा जनाः ? विज्ञात गुणान्वया अपि-प्रसिद्धगुणवंशजाता अपि। अकुलीनाः-कुलीनं पूजयति तदा पूजयन्तु, (किन्तु) कुलीना अपि अकुलीनं पूजयन्ति, इतिमोह प्राबल्यम्। पुनः किंविशिष्टाः ? लग्नो प्रगच्छग्रहाः-चेतसि निविष्टो यः स्वगच्छप्रतिबन्धः तद् युक्ता इत्यर्थः। द्वारम् ॥९-१३॥

'गुणद्वेषी' इतिद्वारं निषेधयितुमाह—

व्याख्या—दुष्प्राप्या० ॥ गुरुकर्मसञ्चयवतां-गरिष्ठसंसारबन्धहेतुकर्मयुक्तानां प्राणिनां सद्धर्मबुद्धिर्दुष्प्राप्या, कोऽर्थः ? दुःखेन प्राप्यते तस्यां सद्धर्मबुद्धौ जातायामपि उत्पन्नायामपि शुभगुरुर्दुर्लभ यो गुरुरिष्टतरं किञ्चिदुपदिशति। सोऽपि शुभगुरुः पुण्येन यदि प्राप्यते तथापि अमी जनाः स्वहितं कर्तुं नालं-आत्मनो हितं कर्तुं न समर्थाः। किं विशिष्टा जनाः ? गच्छस्थितिव्याहताः-'युष्मत्कुलागतोऽयं गच्छस्तत एनं गच्छं त्यक्त्वा भवद्भिर्नान्यपार्श्वे भवन-सम्यक्त्वव्रतप्रतिपत्त्यादिकं विधेयम्' इति गुरुस्तस्य यतिविहिता व्यवस्था, तया गच्छस्थित्या व्याहताः-वशीकृता इत्यर्थः, अतो हेतोः किं ब्रूमः-किं भणामः ? इह-संसारे, किम् आश्रयेमहि-निषेधेमहि ? किम् माराध्येमहि-कस्याराधनां कुर्मः ? किं वा कुर्महे-विदध्मः, इति दशम द्वारम् ॥ १४ ॥

एतेन प्रव्रज्याऽपि कुलीनस्यैव योग्येति प्रतिपादयन्नाह—

क्षुत्क्षामः किल कोऽपि रङ्कशिशुकः प्रव्रज्य चैत्ये क्वचित् ॥ १५ ॥

व्याख्या—'क्षुत्क्षामः' किलेति संभावने कोऽपि रङ्कशिशुकः-अज्ञातनामा क्षुत्क्षाममन्-बुभुक्षादुर्बलः सन् क्वचिदनिर्दिष्टनाम्नि चैत्ये-जिनगृहे प्रव्रज्य-दीक्षां गृहीत्वा कञ्चन श्रावकं पक्षं कृत्वा तदाचार्यकं प्राप्तः-सूरिपदं गतः सन्, कथम्भूतः ?

मधुरकलिः अभ्यधिकतरकलहः चित्रम्—आश्चर्यं—चैत्यगृहे गृहीयति गृह इव आचरति। निजे गृहे कुटुम्बीयति—कुटुम्ब इवाचरति। स्व—आत्मानं शक्रीयति—शक्रमिवाचरति बुधान्—पण्डितान् बालिशीयति—मूर्खानिवाचरति। विश्वं—जगत् वराकीयति—रङ्कमिवाचरति, अतो मूर्खबहुलं जगत्, यतेः कुलशीलादिकं न विचारयति किञ्चित् मोहनोद्भटनाद्भुतमवलोक्य दुष्टमपि यतिं देववत् पूजयन्तीत्यर्थः ॥ १५ ॥

अस्मिन्नेवार्थे—अपरमपि वृत्तमाह—

यैर्जातो न च वर्धितो न च न च क्रीतोऽधमर्णो न च ॥ १६ ॥

व्याख्या—'यैर्जातो०' ॥ तैरेव अधमाधमैः—अत्यधमैः यतिभिः अयं जनो—लोकः बलात् हठात् वाह्यते—यत्र तत्र नीयते अतः हा! इति कष्टे इदं जगत् नीराजकं—राजशून्यं, राजा चेद् भवति तदा एतदनुचितं न भवति—इत्यर्थः। तैः कैः? यैः यतिभिरयं लोको न जातः—नोत्पादितः योगक्षेमादिसंपादनेन, यैर्न च वर्धितः—शरीरपोषणं न प्रापितः, यैर्न च क्रीतः—अन्यस्मान्मूल्यदानेन न गृहीतः, न च अधमर्णेन—उद्धारादिप्रयोगेण गृहीतः, न च प्राक्—पूर्वं दृष्टः—अवलोकितः, न च बान्धवः पितृव्यभ्रातृसम्बन्धवान्, न च प्रेयान् वल्लभतरः, न च प्रीणितः—तोषितः। एतावता ये यतयः न दृष्टा, न श्रुताः, न च सम्भाषिताः, तैर्दुष्टैर्यतिभिः अयं जनो लोकः बलात् वाह्यते। किंवत्? नस्योत पशुवत् यथा नस्तितः पशुर्यत्र तत्र नीयते इत्यर्थः। चकारः सर्वत्र समुच्चयार्थः ॥ १६ ॥

कुपथावस्थितजडजनानवलोक्य प्रकरणकारः प्राह—

किं दिग्मोहमिताः किमन्धबधिराः किं योगचूर्णीकृताः ॥ १७ ॥

व्याख्या—'किं दिग्मोह०' यद् यस्माद्धेतोः अमी जडाः—मूर्खाः जनाः कुपथात्—कुमार्गात् व्यावृत्तिम्—अपसरणं न दधते—न कुर्वते तस्माद्धेतोः एते जनाः—लोकाः किं दिग्मोहम् इताः पूर्वादिदिक्षु पश्चिमादिविभ्रमः दिग्मोहः तं प्राप्ताः?। किं अन्धबधिराः जाताः? अन्धाः—नेत्रहीनाः। बधिराः—कर्णहीनाः। किं वा योगचूर्णीकृताः?—मस्तकादिषु चूर्णक्षेपेण वशीकृताः। किं वा दैवोपहताः? दैवेन—विधिना उपहताः—विभ्रंशं प्रापिताः। 'अंग'ति संबोधने। किं वा ठगिताः?—स्वायत्तीकृताः। किं वा ग्रहावेशिता?—भूतादिशरीराधिष्ठानाः। न केवलं कुपथप्रवृत्ताः एव सन्ति किन्तु एतद् कुर्वते, कोऽर्थः? जिनमार्गकृते जिनमार्गनिमित्तं मत्सरयन्ति च—ईर्ष्यां कुर्वन्ति च।

किं कृत्वा? सुगुरुः मूर्ध्नि–शालमस्तके पदं–चरणं कृत्वा–विधायेत्यर्थः किंविशिष्टा अमी? स्पष्टोक्तदोषा अपि–साक्षादुत्सूत्रोक्तिरूपपददोषा अपि अलब्धदोषा हि विवेकिनोऽपि कुपथात् निवर्तितुं समीहन्ते किं पुनः अन्येऽपि लब्धदोषाः ते मूर्खा अपि कुपथान्निवर्तन्त एवेति श्लोकार्थः ॥ १७ ॥

सिद्धांते हि रजन्यां जिनस्नात्रं पापपंके निमज्जनाय प्रवर्तति इत्यत आह—

इष्टावाप्ति–तुष्ट–विटभटमतचेटकपेटकाकुलं ॥ १८ ॥

व्याख्या—'इष्टावाप्ति०' जिन मज्जनं–जिनस्नानं अविधिना–सिद्धान्तोक्तविधि वैपरीत्येन मूढजनेन विहितः सन् अघपङ्के–पापकर्दमे निमज्जनमेव जनयति, कोऽर्थः? सिद्धान्तोक्तप्रकारेण यदि देवस्नात्रं न विधीयते तदा स्नात्रादपि नरकपतनमेव भवती त्यर्थः। कथम्भूतं स्नानम्? इष्टा वाप्ति तुष्टविटनट–भटचेटक–पेटकाकुलम्, इष्टायाः–प्रियायाः स्नात्रदर्शन व्याजेनागताया अवाप्तिः–मिलनं, तया तुष्टाः विटाः 'निःशङ्क मत्रापि नः सुरतलीलाप्रवर्तिष्यते' इति धिया मुदिता विटाः–वेश्यापतयः, नटाः–नर्तकाः, भटाः–खड्गादिकलाजीविनः, चेटकाः–मासादि नियमित[वृत्ति]ग्राहिणः, एतेषां पेटक–समूहः, तेन आकुलं–भृशितम्, पुनः कथम्भूतं स्नात्रं? त्रिभुवनविदि जिनत् दोहद नरनारी निकरसंकुलं–त्रिभुवनं–सुरतं तदर्थे निबद्धो दोहदः–अभिलाषो यैस्तैर्नरनारीनिकरैः–समूहैः संकुलं–व्याप्तं। कथम्भूतं स्नानं? रागद्वेषमत्सरेर्ष्यापनं–कस्यचित् परकामिनीं प्रति रागः–स्नेहः, स्वप्रेयसीं अन्येन सह संगच्छमानां पश्यतस्तद्विषयोऽपरो द्वेषः, मत्सरश्च–स्वचक्रामामन्येन सह रूपस्त्रीमवलोकयतः पुरुषस्य, असहिष्णुता–ईर्ष्या, तानिर्ष्यनं–सान्द्रम्, एतावता सकलविकारसामग्री परिपूरितमूर्खजनविहित–स्नानादपि नरके पतनमेव भवतीत्यर्थः ॥ १८ ॥

न केवलं स्नात्रमेव नरकजनकं किंतु अविधि कृतं व्रताद्यपीत्याह—

जिनमतविमुख–विहित–महिताय न मज्जनमेव केवलं ॥ १९ ॥

व्याख्या—'जिनमत०' केवलं जिनमत–विमुखविहितं–जिनशासनविपरीत कृतं मज्जनमेव 'अहिताय' संसाराय न भवति किं तर्हि? (किंतु) तपश्चरित्रदानाद्यपि अनशनादि सर्वविरति अपि शिवफलं–मुक्तिरूपफलं न जनयति। एतावता जिनशास्त्र विपरीत कृतं सर्वमेव निष्फलमेवेति श्लोकार्थः। हि–यतः कारणात् अविधिविधि क्रमात् सिद्धान्तानुक्तोक्तप्रकारेण, सिद्धान्ते यथोक्त येन प्रकारेण जिनाज्ञाऽपि–अर्हदागमोक्ता

मुष्ठानमपि अशुभमशुभाय-अकल्याणासंपत्तये जायते। 'किं'मित्याक्षेपे वाक्यभेदे वा, 'पुन'रिति इदुप्रकारेण भवितहेतु -संसारप्रभवहेतुः विडम्बनेप-लोकोपहासास्पदमत्र न प्रसार्यते न विस्तार्यत ? अपि तु विस्तार्यत एवेत्यर्थः ॥ १९ ॥

अन्यदप्याह—

जिन-गृह-जैनबिम्ब-जिनपूजन जिनयात्रादि विधिकृत ॥ २० ॥

व्याख्या—'जिनगृह'० इह-प्रवचने एतदपि सर्वं स्फुट-प्रगट व्यक्तमेव अनभिमतकारि भवति-अनिष्टविधायि भवेत् ॥ कस्मादित्याह—कुमत-कुगुरु-कुग्राह कुबोध-कुदेशनांशतः, अस्यार्थः-कुत्सित मतं कुमत, कुत्सितो गुरुः कुगुरुः, कुग्राहः-सिद्धान्तप्रायस्वमतिकल्पितासम्पदार्थसमर्थनानुग्रहणविषयो मानसोऽभिनिवेशः, जिन शासनस्याज्ञानादन्यथा परिच्छेदः कुबोधः, सिद्धान्ताभिहितार्थानां वि पासेन प्ररूपणा भणिता कुदेशना, तासाम् अंशतः-लेशतः। एतत् किं ? जिनगृहं-अर्हद्भवन, जैनबिंब-भागवती प्रतिमा, जिनपूजन-भगवत्पूजा, जिनयात्रादि-भगवत्कल्याणकाष्टाहिकादि, एतत् सर्वं विधिकृतमपि-जिनोक्तप्रकारेण निष्पादितमपि दानतपोव्रतादि-दान तपसी पूर्वे व्याख्याताम्, व्रतादि-स्थूलप्राणातिपातविरमणादि, गुरुभक्तिः-आचार्य शुश्रूषा, श्रुतपठनादि-सिद्धान्ताध्ययनं। एतत् सर्वमपि उक्तहेतोः अनिष्ट विधायि भवेत् आदृतमपि-सबहुमानमपि। किमिव ? वरभोजनमिव यथावसरं इदं भोजन विषलवनिक्षेपतः-गरलकणनिक्षेपात् अनभिमतकारि भवति-अनिष्टविधायि भवति, एतावता कुमतादि संसर्गाज्जिनपूजनादिकमपि शुभदायि न भवतीत्यर्थः ॥ २० ॥

सकपटपर्वि वर्णयन्नाह—

आकर्ण्ड मुग्ध-श्रीमान् वञ्चितपिशितवद् बिम्बमात्रस्य जैने ॥ २१ ॥

व्याख्या—'हा' इति कष्टे, अय जनो-लोकः शठैः-धूर्तयतिभिः वञ्च्यते-विप्रलभ्यत। किं विशिष्टः ? अशालुः-विवेकविकलः धर्मेच्छावान्, क इव ? शाकिन्यादिवशीकृत इव यथा शाकिन्यादिवशीकृतः कश्चित् वञ्च्यत ॥ कैः ? यात्रास्नात्रा द्युपायैः, यात्रा-जिनयात्रा, स्नात्र-जिनस्नानम्, इत्यादयः उपायाः-प्रकारास्तैः, न केवल यात्राद्युपायैः, नमस्यितक-निशाजागरादिच्छलैश्च, नमस्यितकं-उपयाचितकं "भवता मिदानीमीदृश उपद्रवः समुपस्थितस्तस्मात् भवद्भिस्तन्निवृत्तये जिनगोत्रशासनसुराणां

इयद् द्रव्यमेवपणीय "मिति । निशाजागरादिच्छलैः–रात्रिजागरणादिव्याजैः किं कृत्वा वञ्चयते ? जैनबिम्ब आदर्श्य दर्शयित्वा, कोऽर्थः ? जिनप्रतिमां दर्शयित्वा । न केवल जिनप्रतिमां दर्शयित्वा तथाक्षा–जिननामधेयेन स्वेष्टसिद्ध्यै–आत्माभिमतनिष्पत्त्यै गृहान् कारयित्वा, कथम्भूतान् गृहान् ? रम्यरूपान्–मनोहरान् किंवत् दर्शयित्वा ? मुग्धमीनान् आकृष्टुं बडिशपिशितवत्, यथा व्याधो बडिशे–मत्स्यवेधने पिशित–मांसं विधाय मुग्धमीनान्–मुग्धान् मत्स्यान् आकर्षयति ? हेयोपायोदेयविचारशून्यतया धर्म्मे भद्रालवस्तएव मत्स्यास्तान् ॥ २१ ॥

सर्वत्रात्यगिताभवाः स्वविषयव्यासक्तसर्वेन्द्रियाः ॥ २२ ॥

व्याख्या—कष्टमिति खेदेन उद्धतधियः–'नास्त्यस्मत् समो जगति संप्रति कश्चन 'ति दर्पाध्मातपुरुषः तुष्यन्ति–मोदन्ते, पुष्यन्ति–वर्द्धन्ते च, किं कृत्वा ? स मुनि मूर्द्धसु स्थित्वा–मुनिमस्तकेषु स्थितिं विधाय, किं विशिष्टाः ? अन्त्याश्चर्यराजाश्रिताः–दशमाश्चर्येणानुगताः, यथा नीचा अपि कश्चन राजादेरवष्टम्भेन महतामपि मूर्द्धानमा रुह्य पुष्यति । एवमेतेपि दशमाश्चयराजाश्रिता महामुनीन् परिभूय पुष्यन्तीत्यर्थः ।

पुनः किं विशिष्टाः ? सर्वाकृत्यकृतोऽपि–कोऽर्थः ? लोकलोकोत्तरविरुद्धा–ब्रह्म सेवनपुष्पफलाद्युपभोगाद्यसदाचारकारिणोऽपि सर्वमकृत्यं कुर्वन्तीत्यर्थः । सर्वत्रात्य गिताभवाः लोकममक्षम् अनिरुद्धपश्चाभवाः । पुनः किम्भूताः ? स्वविषयव्यासक्त सर्वेन्द्रियाः, स्वविषयेषु–स्पर्शादिषु व्यासक्तानि–विशपणलग्नानि इन्द्रियाणि–त्वगा दीनि येषां ते । पुनः किम्भूताः ? वल्गद्गौरवचण्डदण्डतुरगाः, वल्गन्तः–पदच्छया प्रसरंतः गौरवैः चण्डाः–उत्कटाः, दण्डाः–अकुशलमनोवाक्काया एव तुरगा येषां ते । पुनः किम्भूताः ? पुष्यत् कषायोरगाः सुपुष्टक्रोधमन्याः । एतावता पञ्चाश्रवविरमणे–पञ्चेन्द्रियनिग्रहे–दण्डत्रयविरति–कषायचतुष्टयजय–लक्षणसप्तदशविधसंयमविहीना अपि ते सत्साधूनतिक्रामन्ति, इति श्लोकार्थः ॥

इदानीं दुष्टयतिभ्यो गृहस्था एव श्रेष्ठा इति दर्शयितुमाह—

सर्वारम्भ–परिग्रहस्य गृहिणोऽप्येकाशनापेक्षता ॥ २३ ॥

व्याख्या—'सर्वारम्भ०' गृहिणोऽपि हृदि तीव्रानुतापो भवेत् । निष्ठुर पश्चात्तापो जायते । किं विशिष्टस्य गृहिणः ? न रक्षतः–न पालयतः, किम् ? एका

मनादि-एकभक्तादि, किं कृत्वा ? प्रत्याख्याय-नियम्य । क ? एकदा-अष्टम्यादि तिथिषु । यदि कश्चिद् गृहस्थः अष्टम्यादितिथिषु एकभक्तादेर्नियमं गृह्णाति पश्चात् तं-खण्डयति तस्य चेतसि महान् पश्चात्तापो भवतीत्यर्थः। किं विशिष्टस्य गृहिणः ? सर्वारम्भस्य परिग्रहस्य-सकलपापव्यापारतत्परस्य सदा-सर्वदा, ये पुनः त्रिधा-मनोवाक्कायारूपेण त्रिविधं-कृतकारितानुमतिलक्षणं पापं पट्ट कृत्वा-पट्टाराम् प्रतिदिन-प्रतिवासरं प्रोच्यापि उक्त्वाऽपि भञ्जन्ति-खण्डयन्ति तेषाम् असाधूनां क तपः ? तपो नास्ति, सत्यवचनं च नास्त्येव । ज्ञानिता-सिद्धान्तपरिच्छेदृत्वं च नास्ति । व्रत दीक्षा च नास्तीत्यर्थः ॥ २३ ॥

देवार्थे-व्ययतो यथारुचिकृते सर्वर्तुरम्ये मठे ॥ २४ ॥

व्याख्या—'देवार्थे०' अहो ! इति आश्चर्ये सितपटाः-श्वेताम्बराः कष्टं व्रतं चरन्ति-दुष्करं चारित्रं अनुतिष्ठन्ति । किंविशिष्टाः ? साधुव्याजवशिठाः-यतिव्याजेन धूर्ताः । पुनः कथम्भूताः ? यथा रुचिकृते-स्वमनोभिलाषरूपे मठे नित्यस्थाः सर्वदा मनोरमजिनगृहनिवासिनः । किं कुर्वन्तः ? देवार्थे व्ययतः-तद्देवद्रव्यं व्ययं कुर्वन्तः । कथम्भूते मठे ? सर्वर्तुरम्ये-सकलवसंतादिऋतुमनोहरे । पुनः कथम्भूताः ? शुचिपट्टतूलशयना:-निर्मलपट्टवस्त्रयुत् तूलशयनाः कोमलशय्याशायिन इत्यर्थः। पुनः कथम्भूताः ? समृगन्दिकायासनाः-कोमलगन्दिकायासनमात्रः । पुनः कथम्भूताः ? सारम्भाः आरंभसहिताः । पुनः कथम्भूताः ? सपरिग्रहाः-धनधान्यादिभाण्डसंग्रहपरायणाः, सविषयाः-विषयासक्तचेतसः सेर्ष्याः-सक्रोधा । सकाङ्क्षाः सम्भोगविलासोत्कण्ठिताः, सदा-सर्वदा ॥ २४ ॥

इत्यापुद्गलसोपहासवचसः स्युः प्रेत्य लोकाः स्थितिं ॥ २५ ॥

व्याख्या—'इत्यापुद्गल०' येषां मिथ्योक्त्या-मिथ्यात्ववचनेन सुदृष्टोऽपि सम्यग्ज्ञाना अपि मनो भ्रमति-धारयति । कथम्भूतं मनः ? सन्देहदोलाचलं इदं समीचीनं इदं वा इति यः संदेहः स एव दोला-हिन्दोलकस्तेन चञ्चलं, ननु निश्चितं सर्वथा जिनपथप्रस्पर्धिनः, कोऽर्थः ? अर्हत्पथप्रमुभूताः लोकाः -जनाः स्थितिम्-भवाचाररूपां श्रुत्वा इत्यापुद्गलसोपहासवचसः स्युः, कोऽर्थः ? उक्तप्रकारेण सहास्यवचना भवेयुः-'अहो जैनाः अन्यथावादिनः अन्यथाकारिणः, अस्माकमेव दर्शनं श्रेयः, इत्यादि वचनसन्दर्भेण, अतो हेतोः मतिमन्ता अपि जनाः श्रुतवचाद्-जिनसिद्धान्त

मार्गाद् वैमुख्यं-विमुखतां आतन्वते-विस्तारयति । मिथ्यावादिनां मिथ्यावचनेन अभिमुखा अपि जना जिनमार्गाद् विमुखा भवन्ति, इति श्लोकार्थः ॥ २५ ॥

सर्वैरुत्कटकालकूटपटलैः सर्वैरपुण्योच्चयैः,

व्याख्या—'सर्वैरुत्कट०' ॥ २६ ॥ 'ततः' इति पदमत्र श्लोकस्यात्र वर्तते । ततो हेतोः-पश्चादुक्त हेतोः-अमु-दुर्मार्गम् आसेदुषां-प्रस्थितानां मानसं नूनं निश्चितं एतैः क्रूरमकारि-क्रूरं कृतम् एते के ? सर्वैः उत्कटकालकूटपटलैः अत्युग्रविषसमूहैः न केवलं उत्कटकालकूटपटलैः सर्वैः अपुण्योच्चयैः-सकलपापराशिभिः, न केवलमेतैः सर्वेषां सङ्क्लेश-अशेषसर्पसमूहैः, न केवलमेतैः समस्तविधुराधिव्याधिदुष्टग्रहैः सकलदुःखमनो व्यथामङ्गलादिपापग्रहैः । कथम्भूतानां ? दौरात्म्येन-दुरात्मत्वेन जिनपथं निजम्भु पाम्-उच्छेत्तुणां, पुनः कथम्भूतानाम् ? वचनेन इति ऋजुतार्थ-अभिदधुषाम् ॥ २६ ॥

अतः—

दुर्भेदस्फुरदुग्रकुग्रहतमः स्तोमास्तधी चक्षुषां ॥ २७ ॥

व्याख्या—'दुर्भेदस्फुरदुग्र०' अतो हेतोः सदा-सर्वदा मिथ्याचारवतां-मोक्षमार्गविपरीताचारयुक्तानां वचांसि सकर्णैः-सचक्षुः कथं कर्णे क्रियते ? कथं भवने धारयति ? अपि तु न कथमपि इत्यर्थः । कथम्भूतानां मिथ्याचारवतां ? स्वयं नष्टा नाम् पुनः कथम्भूतानाम् ? अन्यनाशनकृते-परनाशाय यतोद्यमानां स्वयम् नष्टा परा नपि नाशयन्तीत्यर्थः । पुनः कथभूतानां ? 'महामोहात्'घन-प्रचुरतरा-विवेकात्' 'अहं मानिनां'-अहमेव, नान्यः इति मानिनां । पुनः कथम्भूतानां ? सिद्धान्तद्विषतां-जिनशासनवैरिणाम् । पुनः कथम्भूतानां ? दुर्भेदस्फुरदुग्रकुग्रहतमःस्तोमास्तधीचक्षुषां-दुर्भेदाः दुश्छेद्याः स्फुरंतो-मनसि आग्रहरूपाः ये उग्रकुग्रहाः-जिनगृहनिवासादयस्त एव तमःस्तोमाः-अन्धकारपटलानि, तैरस्तं प्राप्तिं धीरेव चक्षुर्येषां तेषाम् ॥ २७ ॥

यत्किञ्चिद् वितथं यदप्यनुचितं यल्लोक-लोकोत्तरो ॥ २८ ॥

व्याख्या—'यत् किञ्चित्०' यत् कुधियः-कुबुद्धयः तच्चधर्मं इति ब्रुवन्ति-अयमेव धर्म इति कथयन्ति तत् दुरन्त-दुष्टमामर्षस्य विस्फूर्जितं-विजृम्भितं, तत्, किं यत् किञ्चित् वितथं-अलीकं यदिति सामान्यतो निर्दिष्टं विशेषतोऽनिर्दिष्टनामा, यदप्यनुचितम्-अयोग्यं यल्लोकलोकोत्तरोत्तीर्णं-जिनमार्गाद् बहिर्भूतं जिनप्रवचनबाह्य

जिनमार्गाद्वीतमित्यर्थः, यश्चाविनां-देहिनां यद्धेतुरेव येन संसारबन्धो भवतीत्यर्थः, यतः शास्त्रबाधाकरं-सिद्धान्तविरुद्ध न केवलं धर्म्मं इति कथयन्ति । अर्हन्मतभ्रान्त्या लान्ति च, क्षोऽर्थः ? जिनमार्गोऽयमिति मिथ्याज्ञानेन गृह्णन्ति च, कथम्भूतास्ते ? मूढाः ॥ २८ ॥

साम्प्रत मुग्ध जनान् प्रति स्वमतं मोक्षपथतया दिशत, सत्पथगामिनश्च धार्मिकान् स्ववचनाननुरोधित्वेनाज्ञतया अवजानानस्य कस्यचिद्यथा छन्दाचार्य प्राम ण्योऽप्रस्तुत प्रशंसया स्वरूपमाह—

कष्ट मदृष्टिर्यो नृणां यदिदष्टां कान्तारवैदेशिकः ॥ २९ ॥

व्याख्या—' कष्टं ' दुःखमेतच्चेतसि वर्तते, यस्किमित्याह—यदिति वाक्योप क्षेपे, यन्नृणामदृष्टां मार्गं वैदेशिकः कान्तारेऽभीप्सितपुराध्वानं प्रदिशतीति सम्बन्धः । तत्र ' नृणां ' पुंसां नष्टदृष्टां-अलोचनत्वात् कान्तारपातेन दिग्मूढत्वाच्च प्रनष्टप्राची प्रतीच्यादिककुब्विभागपरिच्छेदानां, अदृष्टां-काचकामलादिनां दृग्विकलानां, न तु जन्मान्धानां, जन्मान्धो च मामिष्यास्या लोचनरहितः । ननु सोऽपि तद्देशजात इतरेभ्यः श्रवणादिना विज्ञाय कथञ्चिदिष्टपुरपथं देश्यतीति तत्रोक्त " वैदेशिक " इति, विदेशे-योजनशतव्यवहिते देशान्तरे जातो वर्द्धितश्चेति वैदेशिकः । स हि तद्देशस्वरूपमात्रस्या प्यनभिज्ञत्वात्कथं प्रकृतमार्गं जानीयादपि । ततः कर्मधारयः । कान्तारे ' जनसञ्चार शून्ये दुर्गवर्त्मनि ' प्रदिशति ' प्रतिपादयति अभीप्सितपुराध्वानं-जिगमिषितनगरमार्गं, किलेति वार्तायां, उत्कन्धरः-उद्ग्रीवः क वराङ्गुलमग्र्य भुजदण्डमुत्क्षिप्य कथयतीति कष्टमेतद् । तु पुनरर्थे, [redacted] वक्ष्यमाण पुन कष्टतरं-पूर्वस्मादपि कष्टान्महाकष्टं, यत् किमित्याह-' सोऽपि ' प्रागुक्तो मार्गदेष्टा ' मुग्धो ' निर्मलनयनानव एव ' सन्मार्गगान् ' इष्टनगरसुगमपथप्रस्थितान् तद्विदः ' सम्यक्सन्मार्गज्ञान् यत् हसति, सावज्ञमिति क्रिया विशेषण, सावहेलं अज्ञानिव, यथा मार्गाभिज्ञा मार्गमुपदिशन्त उपहस्यन्ते लोकेन, तथैवेऽपि तेन । एवं प्रस्तुतमुपमान योजयित्वा प्रस्तुतमुपमेयमिदानीं योज्यते, कष्टमेतद्-' यत् नृणां ' सत्पथेप्सुपुरुषाणां नष्टदृशां-अतिमुग्धतया सत्पथकुपथविभा गानभिज्ञानात्, अदृशां सम्यग्ज्ञानदर्शनविकलानां आरप चा- सिद्धान्तरहस्यलेशज्ञान मिज्ञः सर्वथा अगीतार्थः, सोऽपि गीतार्थसंसर्गादेः कथञ्चि मोक्षपथकथनप्रवीणः स्या दत्राह-वैदेशिको गर्हिताचारत्वाद् गीतार्थानिपुणमपशब्दमात्रवर्जितः एव चाधुनिकदुस्साध प्रवरो निशङ्क निर्भयसपथप्रत्यर्थिमार्गकथनदीक्षितोऽय यथाछन्दशिरोमणिः कश्चिदा

चार्यो मन्तव्यः। कान्तारे-भवमहाटव्यां प्रविशति अभीप्सितपुराध्वान-मुक्तिमार्गं उत्कन्धरो-दर्शिताहङ्कारविकारः, तथा च सोऽगीतार्थः उत्सूत्रभाषको मिथ्यादृष्टिः कथञ्चिदपि सत्यं मोक्षमार्गं न वेत्ति, नाप्यन्येन गीतार्थेन प्रतिपादितोऽपि प्रत्येति इति कष्टं, एतस्मादपरं त्विति पूर्ववत्, सोऽपि प्रागभिहितो यथाच्छन्दाचार्यः सुदृशः-सम्यग्ज्ञानदर्शनयुक्तः मन्मार्थगान् ज्ञानदर्शनचारित्रलक्षणमुक्तिपथप्रवृत्तान् तद्विदो-मुक्तिमार्गविज्ञान् धार्मिकान् सुविहितसाधून् यत् हसति सावज्ञमज्ञानिव, यथा-अममी अगीतार्था मूर्खशिरोमणयः सिद्धान्तरहस्यं जानन्ति ?, अहमेव सकलश्रुतपारावारपारदृश्वा, ततो यदहं ब्रवीमि स मुक्तिमार्ग इति। किमित्येवमुपहसतीत्यत आह-सन्महाकष्टमित्युपमानोपमेययोस्तुल्यतया योजना। अत्र च मुग्धजनपुरतो निरङ्कुशं स्वकल्पितं चैत्यवासादिकमुत्सूत्रप्रपथं प्रथयद्भिर्विविधपापारम्भप्ररूपणानिपुणान्, सुगुरुसम्प्रदायानुवर्तिनः सुविहितानहत्योपहसन् सम्प्रति वर्तमानः कुसङ्घाचार्यवर्गोऽनया भङ्ग्या कविना प्रतिपादित इति हृदयार्थः ॥ २९ ॥

साम्प्रतं श्रुतपथाबकद्वारमुपसंजिहीर्षुः शुद्धजिनमार्गस्य दुष्टोपचितसमुदितकालकलापेन सम्प्रति दुर्लभत्वं प्रतिपादयन्नाह—

सैषा दुष्मावसर्पिण्यनुसमयह्रसदल्पभावानुभावा ॥ ३० ॥

व्याख्या—'सैषा दुष्मा'॥ एव अमुना प्रकारेण अनुकूल-प्रतिसमय दुष्टेषु-क्रूरेषु पुरुषेषु सत्सु जैनमार्गो दुर्लभः-अर्हत्पथो दुष्प्राप्यः, यदा तु क्रूराः पुरुषास्तदा जैन मार्गो दुर्लभो जात इत्यर्थः। एवं कथ ? सैषा दुष्मानाम्नी अवसर्पिणी-कालविशेषः। कथम्भूता-अवसर्पिणी ? अनुसमयं ह्रसदल्पभावानुभावा, अनुसमयं-प्रतिसमयं प्रतिक्षणं ह्रसन्-हीयमानः अल्पजनानां शुभभावस्यानुभावः-प्रभावो यस्यां सा। अयं त्रिंशत् उपप्रहृत्त।

जिनसिद्धान्तोक्ताष्टाशीतिग्रहमध्यात् त्रिंशतः पूरणो भस्मराशिः, कथम्भूतो भस्मराशिः ? ख-ख-नयमितिवर्षस्थितिः "पश्चानुपूर्व्या अङ्करचना ज्ञातव्या"। खं-शून्यं, तस्मात् पुनः खं-शून्य, तत् पश्चात्स्वं-विधुरेरेकः एतावत् (२०००) स्थितिः। अन्त्यदशमाश्चर्यं च असंयतपूजाऽनाचारप्रतिपादकमाश्चर्यं च तत्समा दुष्षमा च तेरेव-भस्मिभीमस्मराशिदशमाश्चर्यैः समा तत्समा दुषमा दुःखकारिणी, तस्यै जिनमतहतये-जिनमार्गोच्छेदनिमित्त यदैते दुष्टास्तदा जैनमार्गो दुर्लभ इत्यर्थः ॥ ३० ॥

एव तावदष्टादशभिर्वृत्तैः प्रबन्धेन लिङ्गिनां श्रुतपथावज्ञा प्रतिपादिता। संप्रति 'गुणद्वेषी'रिति द्वारं निराचिकीर्षुस्तेषां गुणद्वेष दर्शयन्नाह—

सम्यग्मार्गपुषः प्रशान्तवपुषः प्रीत्योल्लसच्चक्षुषः ॥ २१ ॥

व्याख्या—' सम्यग्मार्गपुषः० ' ॥ तयपूरूपः–प्रचण्डकोपाः सत्साधून् सुविहितयतीन् न क्षाम्यन्ति–न सहन्ते । किंविशिष्टान् सत्साधून् ? सम्यग्मार्गपुषः–ज्ञानादित्रयस्य मोक्षपथो[स्य]विस्तारकान् सम्यग्ज्ञान–सम्यग्दर्शन–सम्यक्चारित्रपथ पोषकान् । पुनः किंविशिष्टान् ? प्रशान्तवपुषः–रागद्वेषादिरहितशरीरयुक्तान् । पुनः किंविशिष्टान् ? प्रीत्योल्लसच्चक्षुषः–प्रसन्नोत्फुल्लनयनान् सर्वत्र सदयावलोकिन इत्यर्थः । पुनः किंविशिष्टान् ? श्रामण्यर्द्धिमुपेयुषः–पञ्चमहाव्रतसम्पर्धि आसदुषः–पञ्चमहाव्रतानि–प्राणातिपात–मृषावाद–दत्तादान–मैथुन–परिग्रहाणां त्यागस्तत्र सम्पर्धि उपगतानि–इत्यर्थः । पुनः किम्भूतान् ? संयमुषः–निरहङ्कारिणः । पुनः किम्भूतान् ? कन्दर्पकथ मुषः–न मयकुक्कुत्मदाहिनः । पुनः किम्भूतान् ? सिद्धान्ताध्वनि तस्थुषः–जिनोक्त सम्यग्मार्गे स्थितान् तत्परानित्यर्थः । पुनः किम्भूतान् ? क्षमाक्षुषः–क्षान्तियुक्तान् पुनः किम्भूतान् ? सत्पुण्यतां अग्मुषः–विवेकजनाराध्यत्व प्रापितान् । एव गुणविशिष्टानपि सद्भूयतीन् तयपूरूपः–प्रबलकोपाः न क्षाम्यति– न सहन्ते इत्यर्थः ॥ २१ ॥

देवीयत्युरुदोषिणः सदमहादोषानदेवीयति ॥ २२ ॥

व्याख्या—' देवीयत्यु० ' ' अहो ' इत्याश्चर्ये जनो–लोकः अगुणाश्रय अगुणमस्त्वार्थं स्व–आत्मानं कृतार्थीयति–कृतार्थमिवाचरति–आत्मानं विहितसकल–कर्तव्यमिवाचरति, कथम्भूतो जनः ? मिथ्यात्वग्रहिलः–प्रबलमिथ्यात्वगम्भीरः प्रब लमिथ्यात्वाभिनिवेशग्रहग्रहीतः । पुनः किं करोति ? उरुदोषिणः–प्रचुरापराधान् देवी यति–देवानिवाचरति, ये प्रबलदोषास्तान् । देवान्–जिनसरवान् मन्यत इत्यर्थः । पुनः किं करोति ? सदमहादोषान् प्रभ्रष्टप्रचुरापराधान् अदेवीयति–अदेवान् इवाचरति । पुनः किं करोति ? मूर्खमुख्यनिकर–महामूर्खसमूह सर्वज्ञीयति–सर्वज्ञमिवाचरति । पुनः किं करोति ? तत्त्वज्ञम् अज्ञीयति–षड्दर्शनवेत्तारं मूर्खमिवाचरति । पुनः किं करोति ? जैनमार्गम् कुमार्गीयति–कुमार्गमिवाचरति । पुनः किं करोति ? अपथं–अ मार्गं सम्यक्–पथीयति–सन्मार्गमिवाचरति । एतावता सर्वमेव विपरीताचरणमाचरती त्यर्थः ॥ २२ ॥

ये केचन दुष्पतिनो मुक्तमिवात्मानं मन्यन्ते तान् दूषयितुमाह—
सद्ध्याकृतचैत्यकूटपतितस्यास्त्वर्ता तान्वत ॥ २३ ॥

व्याख्या—' सद्ध्याकृ० ' अन्तर्दशिमतस्य कुतो मोक्षः ? अन्यत एव

हरिणा , तेषां समूहस्य कुतो मोक्षः—कुतो निर्वाणम् ? कथम्भूतस्य जन्तु हरिणव्रातस्य ? सङ्घव्याघ्रवक्त्रस्य उत्सूत्र प्रज्ञापकः स्वच्छन्दचारी विषयलोलुपः साधु-साध्वी-श्रावक श्राविकासमवायो मूषानिह सङ्घ उच्यते, स एव व्याघ्रः, यथा व्याघ्रा यचस्य हरिण व्रातस्य मोक्षः स्फुटनं न भवति तथैवेति । पुनः कथम्भूतस्य ? सङ्घा-श्रावकलोकेन कृतचैत्यकूटपतितस्य भक्त्या तदायत्तो कृतानि जिनगृहाणि, एतान्येव कूटाः मृगबंधन-यन्त्रविशेषास्तेषु प्रतिबद्धस्य । पुनः किं विशिष्टस्य ? अन्तस्तरां चेतोमर्मणि ताम्यतः सिद्यमानस्य मृगोऽपि बद्धः सन् चेतोमर्मण्यतितरां सिद्यति पुनः किं विशिष्टस्य ? स मुद्राद्रुढपाशव घनबद्धः सन्-तस्य सङ्घस्य मुद्रा चतुर्दश्यादिपर्वतिथयस्ता एव दृढ पाशाः, तैर्घ घन, तद्युक्तस्य । अत एव स्पन्दितु-चलितु अपि न शक्तस्य-न समर्थस्य । पुनः कथम्भूतस्य मुक्तये-मोक्षार्थं कल्पितदानशीलतपसः-विहितदेशचारित्रानघना देरपि । एतत्क्रमस्थायिनः-एतस्य-सङ्घस्य क्रमो-रात्रिस्नात्रादिका परिपाटी तदनुवर्तिनः । एतावद्-बन्धनयुक्तस्य तत्रापि संघशार्दूलवक्त्रस्य जन्तु-हरिणव्रातस्य कुतो मोक्ष ? न कुतोऽपीत्यर्थः ॥ १३ ॥

इत्थ मिथ्यापथकथनया तथ्ययाऽपीह कश्चित् ॥ १४ ॥

व्याख्या—' इत्थ मिथ्या० ' ॥ इह-लोके इद अनुचितं-अयोग्य कश्चिन्मा शासीत् । इद जिनवचने-नोक्त संघपूजारूप अनुचितमिति मा कश्चिन्मस्त कुपा ? इत्थ-पूर्वोक्तप्रकारेण मिथ्यापथकथनया-दिगम्बरोक्तमिथ्यापथप्ररूपनया । कथम्भूतया ? तथ्ययापि-सत्ययापि । अथानन्तरं कश्चित् मा कुपत्-मा कोपं कार्षीत् । अथ यद्येवं मिथ्यापथकथनेन परेषां क्रोधशङ्का तदाऽसौ न कथनीय एवेत्याह-' यस्मा 'दिति यस्मात् कारणादेतत् किमपि दिग्मात्र कृपया-अनुकम्पया कथितं-सकृत-जल्पितं च-मतिमद्येनोक्त च । किं कृत्वा ? नॄन्-मानवान् प्रेक्ष्य-अवलोक्य । कथम्भूतान् नॄन् ? जैनभ्रान्त्या-' अय जैनमार्गः ' इति मिथ्याज्ञानेन कुपथपतितान्-कुमार्गप्रस्थितान् कस्मै कल्पित ? तत्प्रमोहापोहाय-तेषां नृणां प्रचण्डमोहनाशाय । यथाऽमी मूढाः कुपथ स्वरूप विज्ञाय तत्परित्यागेन सत्पथं गृहीत्वा संसारसागरं तरिष्यन्तीति कृपया जल्पितमित्यर्थः ॥ १४ ॥

किमपि दिग्मात्र जल्पितम् ? इति कथमुक्त यावता सकलमेव कथ नोक्त—मिति-अतः आह—

प्राग्बुद्धेऽनन्तकालात् कलिमलनिलये नाम भवध्यवताऽस्त् ॥ १५ ॥

व्याख्या—प्रोद्भूत० यः कश्चित् नृषु-मनुष्येषु कुबोधं निरसिसिषुः सन् कुदेश नोत्पादित दूरीकर्तुमनाः सन् दुरध्व-कुमार्गे दोषसंख्यां विवक्षेत्-'कुमार्गे एतावत्-संख्या को दोषः' इति वक्तुमिच्छेत् स पुमान् अम्भोऽम्भोधेः प्रमित्सेत्-प्रमातुमिच्छेत्। वेति पक्षान्तरं सकलगगनोल्लङ्घन विधित्सेत्-सकलाकाशस्यातिक्रमणमिच्छेत्। योऽम्भोऽम्भोधेरप्याहरत्, यश्च समस्तगगनस्योल्लङ्घन करोति सकुमार्गे दोषसंख्यां वदति, अतो दिग्मात्र प्रलपितमिरयुक्तं, तस्मात् कुबोध निरसिसिषुः कारुण्यात्-'माऽमी संसारसागर ब्रुडन्तु' इति कृपातः कथम्भूते दुरध्वे? अनन्तकालात् प्रोद्भूत-अनन्तवर्षमाप्रादिहेतुना संबाधे, कलिमलनिलये-दुःखमहापातकनिवास। पुनः कथम्भूते? नाम नेपथ्यतः-नाममात्राचरणतः अर्हं मार्गभ्रान्ति-सात्त्विकजिनमार्गभ्रान्तय दधाने-बिभ्राणे। पुनः किम्भूते दुरध्वे? तत्त्वतः-परमार्थतः तदभिमरे-अर्हं मार्गघातक यथा अभिमराः प्रच्छन्न घातकाः स्ववेषेण राजादिकं हन्तुमशक्नुवन्तो वेषपरिवर्तनं कृत्वा राजादिकं निघ्नन्ती तथा-एतेऽपि गृहस्थवेषेणार्हं मार्गोच्छेदं कर्तुमपारयंतो यति-वेषेणोच्छेदयन्तीत्यर्थः ॥ ३५ ॥

न सावद्याम्नाया न बकुश-कुशीलोचितयति, ॥ ३६ ॥

व्याख्या—तथा 'न सावद्या०' इह-प्रवचन एते यतय-साधवः अद्यापि दुःषमा कालेऽपि सन्नरतयः स्युः-सिद्धान्ताध्ययनाध्यापन-व्याख्यान-श्रवणपरायणाः भवेयुः। किम्भूता? येन सावद्याम्नायाः न सपापसंप्रदायाः। पुनः किम्भूताः? न बकुशकुशीलो चित यति-क्रियायुक्ताः बकुशं शबलमतिचारेण समलं प्रक्रमाच्चारित्रं, तथा कुत्सितं चरणं येषां, तेषामुचिता-योग्या[क्रिया]साधु-सामाचारी तया न युक्ता-न सहिताः, कुत्सितयति क्रियारहिता इत्यर्थः। पुनः किंविशिष्टाः? मदममताजीवनभयैः-न युक्ताः-जात्यादि मदममता-गृहस्थादिषु जीविकानिर्वाहस्तस्मात् भय येषां ते तादृशा न। पुनः किं विशिष्टाः? न सक्लेशावेशा-न रौद्राध्यवसायोपेताः, पुनः किं भूता 'न कदभि निवेशाः' न कुत्सितमानसा आग्रहवन्तः, पुनः कथं भूता? न कपटप्रियाः न माया बहुमाः, एतावता दुःषमाकालप्रभावात् अ यत्कर्तुमपारयत इत्यर्थः ॥ ३६ ॥

संविग्नाः सोपशमाः मुक्तकल्पमितः क्षेत्र-कालभयपेक्षा ॥ ३७ ॥

व्याख्या—'संविग्नाः सो०' अस्मिन्-जिनशासने सत्साधवः-सुविहित मुनयः सन्त्याः। किंविशिष्टाः सत्साधवः? संविग्नाः-निर्वाणेच्छवः। पुनः किंविशिष्टाः?

सोपदेशाः—धर्मोपदेशतत्पराः। पुनः किंविशिष्टाः ? श्रुतनिकषविदः—शास्त्ररहस्य निपुणाः पुनः किम्भूताः क्षेत्रकालाद्यपेक्षानुष्ठानाः—देशकालानुसारेण विहारादिक्रियारम्भिणः। पुनः किंविशिष्टाः ? शुद्धमार्गप्रकटनपटवः—यथार्थश्रुतपथप्रकाशनदक्षाः यथार्थमेव मार्गं पथ प्रकाशयन्तीत्यर्थः। पुनः किंविशिष्टाः ? ग्रस्तमिथ्याप्रवादाः—दूरीकृतमिथ्या प्रलोकयः। पुनः किम्भूताः ? नियमक्षमदमेत्यादि—नियमो—द्रव्याद्याग्रहः, क्षमः—कषायनिग्रहः,—दम—इन्द्रियदमनं औचित्य—सर्वत्र योग्यतानुसारेण विनयादि प्रयोक्तृत्वं, गाम्भीर्यं—प्रलुब्धहर्षादिविकारत्वं, धैर्यं—विपत्सु अपि अविखिन्नस्य चेतसोऽवैक्लव्य, स्थैर्यं—विचार्य करणीयकारित्व, औदार्यं विनयादिनाऽध्यापनवितरण, आर्यचर्या—सत्पुरुषक्रमप्रवृत्तिता, विनय—अभ्युत्थानादिना गुरुषु प्रतिपत्तिः, नयो—लोक लोकोत्तराविरुद्ध वर्तित्व, दया—दुःस्थितादिदर्शना[ दा ]र्द्रान्त [ करणत्व ] इति दाक्ष्य धर्मक्रियासु नालस्य, दाक्षिण्य सरलचित्तता, तत्तो द्वन्द्वसमासः, एभिर्गुणैः पुण्याः पवित्राः। ईदृशाः साधवो वन्दनीया इत्यर्थः ॥ १७ ॥

सांप्रत प्रकरणकारः प्रकरणं समाप्नुवन्—इष्टदेवता—व्याजेनावसानमङ्गल, स चार्थं चक्रबन्धेन स्वनामधेयमाविर्भावयितुमाह—

विभ्राजिष्णुमगर्वमस्मरमनासाद श्रुतोत्सङ्गे ॥ १८ ॥

व्याख्या—अह जिन वन्दे—तीर्थङ्करं नमस्करोमि। किम्भूत ? विभ्राजिष्णु—अत्यन्तं विराजमानम्। पुनः किम्भूत ? अगर्वं गर्व रहित। पुनः किम्भूतं ? अस्मरं—जितकन्दर्पं। पुनः किम्भूत ? अनामादम्—अवमत्सराभावम्। पुनः किम्भूतं ? श्रुतोत्सङ्गे सद्ज्ञानप्रमर्पि—प्रालोत्सङ्गे केवलज्ञानरूपं। पुनःकथम्भूतं ? वरवपुःश्रीचन्द्रिकामेयर्य—श्रेष्ठशरीर—कार्तिककौमुदीनक्षत्रनाथ, पुनः किम्भूतं ? वर्ण्यं—स्तुत्य, कथम् ? अनेकधा—बहुधा, कैः ? असुर नरैः—देत्यमनुष्यैः, न कवलदैत्यमनुष्यैः शक्रेण च—इन्द्रेण च। पुनः कथम्भूत ? एतच्छिद्—पापच्छचारं। पुनः कथम्भूत ? विदुषां—पण्डितानां दम्भारिं—पापणखर्तुं पुनः कथम्भूतं ? सदा—सर्वदा एकान्तरङ्गप्रदं, केन ? सुवचसा—मधुरगिरा सदसन्नित्यादिरूपतया अनेकान्त रङ्गप्रदातारम्। अत्र श्लोक सपत्नन चक्र च उद्भावनीयः ॥ १८ ॥ चक्रमिदमासन्नम् ॥

जिनपतिमतदुर्गे कालतः साधुवेधैः, ॥ १९ ॥

व्याख्या—'जिनपतिमतदुर्गे०' अधुना—इदानीं तैर्विधयिभिः इयं स्वगच्छस्थितिः मयापि विस्तारिता। कस्मै ? स्वार्थसिद्ध्यै—निजकार्यनिष्पत्तये, कस्त स्वकस्य

मनमञ्जानां शृङ्खलेव आत्माऽऽयत्ती कृता ये मुग्धजना: तेषां बन्धनाय शृङ्खलेव-निगड इव । कस्मिन् सति ? साधुवेषैः-धूर्तैः जिनपतिमतदुर्गे-अर्हच्छासनप्राकारे अभिभूते सति, अर्हच्छासनमेव दुर्गं प्राकारः "कोट" इति भाषया तस्मिन् विषयिभिः-कामिभिः उपद्रुते सति यदा भगवच्छासनमेव दुर्गं प्रकारः धूर्तैः उपद्रुत तदा तैः धूर्तैः इयं गच्छ स्थितिः निजगच्छ-मुद्रा विस्तारितेत्यर्थ । कुतः अभिभूते सति ? कालतः दुःषमाकाल दोषात् । कैः ? भस्मकम्लेच्छसैन्यैः, यथा म्लेच्छसैन्यं कस्मिमश्चिदपि दुर्गे स्वभुजबलेन गृहीते द्रव्यार्थं तदन्तर्वर्तिनागरिकलोकबन्धनाय शृङ्खला प्रसारयति च तथा लिङ्गिनः स्वकार्यार्थं मुग्धजनबन्धनाय गच्छस्थितिं प्रसारितवन्त इत्यर्थः ॥ ३९ ॥

संप्रत्यप्रतिमे कुसङ्घवपुषि प्रोज्जृम्भिते भस्मक ॥ ४० ॥

व्याख्या 'संप्रत्य—प्रतिमे०' ॥ इत्थ-अमुना प्रकारेण लोकैः वयं कदर्थ्यामहे-उपहस्यामहे । कया ? सदागमस्य कथयापि-शुद्धसिद्धान्तधर्मस्य देशनाविचारमात्रेणापि । किं कृत्वा ? एकीभूय-एकमतं कृत्वा । कथम्भूतै लोकैः ? तदाज्ञापरैः-मोहराजाज्ञापरैः । कस्मिन् सति ? मोहराजकल्के प्रौढिं वपुषि सति, कोऽर्थः ? मिथ्याज्ञान राजसैन्ये प्रौढतां याति सति । न केवलं मोहराजकल्के प्रौढिं वपुषि सति प्रागुक्तकुसङ्घ शरीरे प्रोज्जृम्भिते सति-अभ्युदये सति, पुनः कस्मिन् सति ? दुरन्तदशमाश्चर्यम्-असंयतपूजालक्षणम्, तस्मिन् विस्फूर्जति सति । कुसङ्घवपुषि । किम्भूते ? संप्रति-अधुना अप्रतिमे-असदृशे कथम्भूते दशमाश्चर्ये ? भस्मकम्लेच्छातुच्छबले-भस्मराशिग्रहरूपाधिपतिसैन्यैः-भस्मको भस्मराशिग्रहः, स यथार्हच्छासनरतानामेकशाधाविधायित्वात् म्लेच्छाः-तुरुष्कास्तेषां सैन्यैः । यथा कश्चि महाराजाधिराजो म्लेच्छमहासामन्तैर्भूमण्डलं साधयति तथा अयमपि मोहराजा भस्मकादिभिर्जिनशासनमविलङ्घयतीत्यर्थः ॥ ४० ॥

## वृत्तिकार-प्रशस्तिः ।

क जिनवल्लभसूरिसरस्वती, क च शिशोर्मम वाग्विभवोदयः ।
सुकृतबोधरिमां सुजनाः सदा भवभयो कृतुकात् प्रकरिष्यथ ॥ १ ॥

श्रीवीरदास इति वीरजिनेश्वरस्य, पादाब्जपूजनपरायणचित्तवृत्तिः ।
श्रीमानभूदमलकीर्तिविलासकेन, येनावृतं जगदिव करुणात्मकेन ॥ २ ॥

तस्यात्मजोऽभवदनन्तगुणाः समय-सम्यक्त्वसंमदविवर्जितपुण्यराशिः ।
श्रीमन् हमीर इति वीरतरः शरीरः, बाढ् कर्मेन्द्रिरनिश जिनपूजमायः ॥ ३ ॥

यस्तुभ्रोऽपि पवित्रकर्मनिरतः सद्विद्यया सर्वतः,
ख्यातः पोरवशापनोऽप्यरचयत् टीकां स्फुटार्थाभिधाम् ।
लक्ष्मीसेन इति प्रसिद्धमहिमा देवान् गुरूनर्चयन्,
श्रीमाञ्जीवदयापरः परपरीतापार्तिहन्ता नरः ॥ ४ ॥

" अथ समर्पणा–

विमले श्रावणमासे, वर्षे त्रि–महिषु–चन्द्र–( १५११ ) संगुणिते ।
कृतवान् लक्ष्मीसेन,–टीकां श्रीसङ्घपट्टकस्य " ॥ ५ ॥ ग्रन्थांक ५०१ ॥

॥ इति श्रीलक्ष्मीसेनकृता श्रीसङ्घपट्टकटीका सम्पूर्णा ॥

अर्हम् नमः ।

श्रीजिनवल्लभसूरिविरचितः

श्रीहर्षराजोपाध्यायविहितलघुवृत्तियुतः

# श्रीसंघपट्टकः

वन्दे शान्तिजिनं शान्ति-कर्तं कर्मोत्करोज्झितम् ।
महोदयेन्दिरोदारं, विमलज्ञानपावकम् ॥ १ ॥

मित्वा दुष्कर्मदुर्गे श्रमदमसमदः साधिकाद्यप्रमाध्ये-
ऽर्थे तीर्थेङ्करश्रीः स्वरतिपदवती लीलया येन लभ्यः ।
भक्तेस्तस्य प्रवक्ता स गुरुमविरतो ! हृद्गतस्त्वं हि तावत्-
स्तेनार्क मां कुरुष्व स्वविमलकमलाकूल वर्द्धमानः ॥ २ ॥

जिनवल्लभसूरीन्द्रैः, कृतः श्रीसङ्घपट्टकः । तद्व्याख्यामल्पधीः कुर्वे, वृद्धटीकाऽनुसारतः ॥३॥

व्याख्या—अथ 'सङ्घपट्ट[क]' इति कः शब्दार्थः ?, उच्यते—'सङ्घस्य' ज्ञानादिगुणसमुदायरूपस्य—साध्व्यादिचतुर्विधस्य 'पट्टको' व्यवस्थापत्रं, यथा राजादयः स्वनियोगिभ्यो व्यवस्थापत्रं प्रयच्छन्ति 'अनया व्यवस्थया युष्माभिर्व्य वहर्त्तव्य'-मिति, एवमिहापि साक्षाद्विपक्षदोषदर्शनद्वारेण स्वपक्षशुद्धसङ्घस्य व्यवस्था वक्ष्यमाणा दर्श्यत इति सङ्घपट्टकः । तत्रादि-वृत्तम्—

वहिव्याजाघटीव कुपथमथनपीमादुरस्तोकलोकः ॥ १ ॥

व्याख्या—'स्तुमः' प्रणुमः, अस्मत् च—प्रयुज्यमानेऽप्युत्तमपुरुषप्रयोगकथना द्वयमिति कर्तृपदं स्वयमिह ज्ञेयं, कं ? देवं, दीव्यते—स्तूयते शक्रादिभिरिति देवः स चात्र प्रकरणात्—भविष्यद्देवतासेन स्वपार्श्वस्थाजिनः, सोऽपीह कमठतपोदुष्टतास्पष्टनलक्षणा साधारणविशेष[ण]योगात्पार्श्वनाथः । तं देवं स्तुमः, यो'ऽनागतेव' प्रतिपादयामासेव । इव शब्दो[ऽत्र उ]त्प्रेक्षाद्योतकः । किं ? इति तदेवाह—विधुरमित्यादि । 'प्राज्ञैः' प्रेक्षावद्भिः 'कार्यं' विधेय 'कुपथस्यसनं' सूर्यसामर्थ्येन पूर्वापराऽविरुद्धवादिशास्त्रविरुद्धमतनिराकरण ।

किं कृत्वा ? 'प्रपद्य' अङ्गीकृत्य, किं ? ' विधुरमपि—व्यसनमपि । अपिः सम्भावने, एतत्सम्भावयति सति सामर्थ्ये स्वापायाशङ्कया कुपथस्खलनाऽप्यधीरस्त्वनन्तजीवसंसार कारणत्वेन महतेऽनर्थायेति । कस्य विधुरं ? 'स्वस्य' आत्मनः कथं ? सपत्स्वत्वस्वभावात् । किलेत्याप्तवादे । कस्मादेव भगवदेव ? इत्यत आह—कारुण्यामृताब्धिः—'कथमयं जनो मया कुमार्गपपाटुद्धरणीयः' इति कृपापीयूषसागरो भगवान् । नहि लोककृपां विना कश्चित्स्वकष्टमङ्गीकरोति । किं कुर्वाण एव भगवदेव ? इत्यत आह—'स्पष्टयन्' प्रकटी कुर्वन्, किं ? कमठमुनितपः—कमठाभिधान—लौकिक—तपस्वि—पञ्चाग्निरूप—कष्टानुष्ठान 'दुष्टं' प्राणिवध—लाभ—पूजा—ख्यातिकामनादिदोषयुक्तं । कथं दुष्टं ? उच्चैरतिशयेन । किं कृत्वा ? 'सन्दर्श्य' दर्शयित्वा, कं ? 'नागं' पञ्चाग्नितपोनिमित्तज्वलिताग्निकुण्डान्तर्वर्ति काष्ठकोटरमध्यगं भुजङ्गं । किं विशिष्टं ? 'वह्निज्वालावलीढं' निरन्तरं प्रज्वलद्वह्निज्वाला-व्याप्तं अर्धदग्धमिति यावत् । क ? 'अग्रे' पुरतः, कस्याः ? 'मातुः' स्वजनन्याः, न केवलं मातुः, तथा समस्तलोकस्य । कस्मात्सकलजनमध्ये भगवांस्तत्तपस्तिरश्चकार ? यतः 'कुपथमथनधीः' असन्मार्गोच्छेदकः । एवं ज्ञानबल—ज्ञातकमठविधास्यमानजलधर धारासम्पातादिस्वापायाभ्युपगमेनापि कमठतपसो दुष्टत्वं स्पष्टयताऽपादिष्टप्रस्थापादि-पत् मद् वद् भवद्भिरपि कुमार्गस्खलनं स्वकष्टाङ्गीकारेणापि कार्यमिति वृत्तार्थः ॥ १ ॥

तदेवमिष्टदेवतास्तवमभिधाय—इदानीं सद्धर्म्यवस्तूपदेशतत्त्वं कथनीयं, तच्च योग्यपुरुषस्य प्रतिपाद्यमानं साफल्यमासादयेत्, तेनोपदेशरहस्यश्रवणयोग्यं श्रोतारं निरूपयितुमाह—

कल्याणाभिनिवेशवानिति गुणग्राहीति मिथ्यापथ ॥ २ ॥

व्याख्या—' उच्यसे ' उपदिश्यसे, त्वमिति युष्मदो श्रोतृनिर्देशः, मयेति कर्तुरात्मनिर्देशः । ततश्च भोः श्रोतः ! मया त्वं सद्धर्म्यवस्तूपां प्रतिपाद्यसे इत्यर्थः । कस्मात् ? इत्याह—कल्याणाभिनिवेशवानिति । इति शब्दा अत्र सर्वेऽपि हेत्वर्थाः । कल्याणः—शुभोऽभिनिवेशः—आग्रहः, सद्ग्रह इत्यर्थः, तद्वान्, सद्ग्राहिणो हि सदुपदेश रत्नभवये परमानन्दः समुल्लसति १ । तथा गुणग्राहीति—अल्पीयसोऽपि गुणस्य ग्रहण प्रवणः, दोषैकग्राहिणो हि अविद्यमानेऽपि दोषे तद्ग्राहकत्वमेव स्यात् २ । तथा मिथ्या पथप्रत्यर्थीति, मिथ्यापथो वक्ष्यमाणो यथाछन्दप्ररूपितोत्सूत्रमार्गः तस्य ' प्रत्यर्थी ' विरोधी, उत्सूत्रमार्गं श्रोतुमप्यनिच्छुः, उत्सूत्रपथाभिलाषुकस्य यथार्थसिद्धान्तोपदे शप्रयासाय स्यात् ३ । तथा विनीत इति गुर्वादिष्वभ्युत्थानादि करणलालसः, विनीतायैव

गुरवः सिद्धान्ततत्त्वं कथयन्ति ४ । तथा अशठ इति-ऋजुस्वभावः, गुर्वादिषु वीचिका (निद्रिः ति) निष्पक्षप्रवृत्तिरित्यर्थः, शठो हि न विद्यायोग्यः ५ । तथा औचित्यकारीति च लोकागमाविरोधेन गुर्वादिषु यथानुरूपं विनयादिप्रवृत्तिरौचित्यं, तत्करणशीलः, औचित्य-हीनस्य शेषगुणाः सन्तोऽपि काशकुसुमसङ्काशाः ६ । तथा दाक्षिण्यीति, दाक्षिण्य-मनुकूलता-जनचित्तानुवर्तित्वं, तद्वान्, निर्दाक्षिण्यो हि बन्धूनामप्युद्वेगकृत् ७ । तथा दमीति-जितेन्द्रियः, अजितेन्द्रियो हि गुरुसभायामपि मन्दायते ८ । तथा नीतिभृदिति-सदाचारपरायणः, तद्वतो हि सर्वेऽपि साहाय्यं मन्यन्ते [संदधते] ९ । तथा स्थैर्यीति, स्थैर्य-कार्यारम्भेऽनौत्सुक्यं, तद्वान्, उत्सुका हि तामस्येन कार्यमारभमाणाः शास्तारमप्युद्वेजयन्ति १० । तथा धैर्यीति, धैर्य-आपत्स्वपि मनसोऽक्षोभ्यत्वं तद्वान्, अधीरोऽपि विघ्नाकुलितचेता गुरुमपि हीलयति ११ । तथा सद्धर्मार्थीति, स [त्] न् (?)-शोभनो धर्मो लोकप्रवाहरहित आज्ञानुगतः शुद्धो मार्गः तस्यार्थी-गवेषकः १२ । तथा विवेकवानिति, पारिणामिक्या बुद्ध्या युक्तायुक्तविमर्शो विवेकः, तद्वान् १३ । तथा सुधीरिति, सुधीः-प्राज्ञः, मन्दो हि वक्ताऽपि गुरुर्न किञ्चित्संस्कारमाधातुमिष्टे १४ । तदेव पूर्वोदित सकलगुणग्रामसम्पन्नः त्वं भोः श्रोता !, ततो मयोपदेशसर्वस्वं श्रूयताम् इति वृत्तार्थः ॥२॥

इदानीं योग्यश्रोतारं प्रति यदुद्दिश्य तत्प्रस्तावनामारचयितुं वृत्तद्वयमाह—

इह किल कलिकालव्यालवक्त्रान्तराल ॥ ३ ॥
प्रोत्सर्पद्भस्मराशिग्रहसबलसमाक्रान्तसाम्राज्यपुण्यम् ॥ ४ ॥

व्याख्या—एवं स्थिते भाविवर्गे सति साधुवेषैः सोऽयं 'पन्थाः' मार्गः अप्राथीति सम्बन्धः । 'प्रतानि' विस्तारितः, कोऽसौ ? 'पन्थाः' स्वेच्छाकल्पित मत 'स' इति सकलजनप्रसिद्धः 'अय'मिति इदानीं प्रत्यक्षोपलक्ष्यमाणः । कथमप्राथि ? 'अभितः' समन्तात् भूरिदेशव्याप्त्येत्यर्थः । कैः ? साधुवेषैः, साधोः सुविहितस्येव वेषो-रजोहरणादि नेपथ्यं, न त्वाचारो, येषां ते तथा, तैः मुनिलिङ्गमात्रधारिभिः । कुत एवमित्याह-विषयिभिः, विषयन्ति-सम्बारमुक्ता बध्नन्ति आसेविन प्राणिनमिति विषयाः-शब्दादयः तद्वद्भिः, विषयासक्तो हि यतीनां दीक्षया विरुध्यते । किंरूपः पन्थाः ? [जिनोक्तिप्रत्यर्थी] जिनानामुक्ति-र्वचनमागमः तस्य 'प्रत्यर्थी' विरोधी । कस्मादेवं विधः पन्थाः प्रथितस्तैः सङ्क्लिष्टेत्यादि, सङ्क्लिष्टः-सातत्येन धार्मिकमनोपतापकर्ता रौद्राध्यवसायवान्, द्विष्टो-मत्सरी-गुणवत्सु गुणव्यसनमगुणबुद्धिः मूढो-हेयोपादेयविमर्शशून्यः, प्रसक्तः-प्रकर्षेण पिशुनः गुणवत्सु गुणासद्भूपारोपणचतुरः, मन्दो-दुर्मेधा यो मन-स्वतामेव

चतुर्विधः स सङ्घस्तस्याम्नायः—शिष्यप्रशिष्यादिसन्तानः तत्र रक्ताः—प्रीतिमन्तः, यद्वा सङ्घक्रियादिविशेषणोपेतो जनो नाम सुविहितसङ्घस्तस्याम्नायो गुरुपारम्पर्यागतश्रुतविद्या-धारणा, तत्र रक्ताः—पक्षपातिनस्तैः, न हि स्वमतश्रवणाचरितं प्रामाण्येन प्रतिपद्यन्ते, अत एव एवंविधा जिनोक्तप्रस्पर्धिनमेव मार्गं प्रथयन्ति। अथ दीप्यमाने सूर्ये इव पारमेश्वरे पथि कुत एव प्रथनस्य तमस इवावकाशस्तत्राह—‘ जगति ’ लोके ‘ विरलतां ’ स्तोकतां—अस्वजनाभ्युपगमनीयतां ‘ याति ’ प्राप्नुवति मति। कस्मिन्? जैनेन्द्रमार्गे—भगवत्प्रणीते सूत्रे प्रतिस्रोतसि पथि। कस्मादेतत्? इत्यत आह—प्रोत्सर्पदित्यादि, प्रोत्सर्पत्—श्रीवीरमुक्तिसमय सञ्जन्मराशिसङ्क्रान्त्या तत्प्रभृतसङ्घस्य बाधाविधायित्वात् प्रोज्जृम्भमाणो भस्मराशिनामा—मङ्गलादिवत् क्रूरग्रहस्तस्य ‘ सखा ’ मित्र, राजादित्वात्। ततश्च प्रोत्सर्पद्भस्मराशिग्रहमख्यं यद्दशमाश्चर्यम्—असंयतपूजालक्षणं। अत्र च तस्य भस्म-राशिदशमाश्चर्ययोर्लौकिकसखयोरिव द्वयोरपि साहचर्येण दुष्ट[ऐकका]र्यकारित्व यथा-छन्दप्रावल्यकारित्वेन मिथ्यात्वपोषस्तस्य साम्राज्यमिव, साम्राज्यं यथा राज्ञः कस्यचित् सकल—मण्डलाधिपत्यं[विपुणि]प्रयपुरस्सरमाश्चर्यं साम्राज्यमुच्यते, एवमिहापि सुविहित जन—तिरस्कारेण सकललोकस्यासंयतजनपदपतित्व दशमाश्चर्यस्य साम्राज्य, तेन ‘पुष्यद्’ एधमान—वर्द्धमानं ‘मिथ्यात्व’ अतत्त्वे तत्त्वप्रतिपत्तिरूपं, तदेव ‘ध्वान्तं’ अन्धकारं, सम्यग्ज्ञानावलोकन—निरासक्षमत्वात्, तेन ‘रुद्धे’ व्याप्ते जैनेन्द्रमार्गे। अथ क सति जैनेन्द्रमार्गे। मिथ्यात्व[ध्वान्त]रुद्धस्यास्य विरलतां प्राप्ते? इत्याह—इह किलेत्यादि इह—जगति, किल—यच्छब्दार्थस्तस्याग्रे वक्ष्यत, प्राणिवर्गे—मानवसमुदाये सति। किंरूपे? लोकोत्तरया कलिकालो जिनोक्तया दुःषमाकालस्तेन, कलिकाल एव—दुःषमाकाल एव निखिलानाचार मरलनिलयत्वाद् व्यालः—सर्पस्तस्य ‘वक्त्रान्तराल’ वदनमध्य, तत्र स्थिति’ अवस्थान ‘सुस्थित’ सतत यः तस्मिन्। अत एव तत्त्वेषु भगवत्प्रणीतेषु जीवाजीवादिषु ‘प्रीतिः’ एतान्येव वास्तवानि तत्त्वानि, न तु कुतीर्थिकप्रणीतानि, [इति] चेतसः प्रमोदः। तथा ‘नीतेः’ न्यायस्य—सदाचारस्य ‘प्रचारः’ प्रवृत्तिः। ततश्च गतौ—यथाक्रम कुदर्शनाभ्यास—दुर्विदग्धत्वेन प्रमादाक्रान्तत्वेन च नष्टौ [तत्त्व]प्रीति—नीति—प्रचारौ यस्य स तथा, तस्मिन्। तथा, ‘प्रसरत्’ तथाविधगुरुसम्प्रदायाभावात्—प्रादुर्भवद् ‘ अनवबोधः ’ सम्यक्-सिद्धान्तार्थापरिज्ञान, तेन परिस्फुरन्तः कापथानां ‘ओघाः’ समूहास्तैः ‘स्थगितः’ तिरस्कृतः सुमतेरपवर्गलक्षणायाः ‘सर्गो’ निष्पत्तिर्यस्य स तथा, तस्मिन्। ‘सम्प्रति’ इदानीं। किलेति सम्भावने, सम्भाव्यते एतत् यत्कलिकालानुभावात् सम्प्रत्येवंविधे प्राणिवर्गे इति वृत्तद्वयार्थः ॥ ३–४ ॥

इदानीं योग्ययोतुरग्रे साधुवेषकल्पिते पथि दर्शनिभिर्द्दीरैः तत्प्ररूपितं धर्मं कथयन् तस्य च कर्मनिर्मूलनक्षमत्वमसम्भावयन् इदमाह—

यत्रौद्देशिकभोजनं जिनगृहे वासो वसत्यक्षमौ ॥ ५ ॥

व्याख्या—अत्र पथि अयं धर्मः—चेत्कर्महरो भवेत् तदा मेरुरब्धौ तरेदिति सम्बन्धः। ‘अत्र’ अस्मिन् प्रत्यक्षोपलभ्यमाने ‘पथि’ मार्गे-लिङ्गिकल्पिते मते धर्म औद्देशिकभोजनादिः, अयं ‘चेत्’ यदि ‘कर्महरो’ ज्ञानावरणादिध्वंसदक्षो ‘भवेत्’ स्यात् तदानीं मेरुर्लक्षयोजनमानः—पर्वतराजः ‘अब्धौ’ सागरे तरेत्। अयं च ‘निदर्शना’ लङ्कारः—तत्रायमर्थः—समुद्रे पाषाणखण्डस्य तरणमसम्भवि किं पुनर्मेरोः ?, ततो यथा मेरोः समुद्रतरणमघटमानं एवमस्य धर्मस्य कर्महरत्वमिति। ‘यत्र’ यस्मिन्पथि, किं ? यतीनामौद्देशिकभोजनादिर्धर्म इष्यत इति सर्वत्र क्रियाऽध्याहारः। तथा ‘उद्देशेन’ विकल्पेन—यतीन्मनसि कृत्वा निवृत्त—निष्पादितं औद्देशिकं। क्रीतादिकत्वात्—इकण्। तच्च तद्भोजनं चाशनादि। यद्यपि सिद्धान्ते औद्देशिकशब्द उद्गमदोषद्वितीयभेदार्थः श्रूयते, तथापीह वक्ष्यमाणहार्थपर्यालोचनेन आधाकर्मणि वर्त्तते, तस्यैवेह केवल यतिनिमित्त विधीयमानत्वेन महादोषतया विवक्षितत्वात्, तदन्ननिवृत्तस्य च सामान्य व्युत्पत्त्यर्थस्योभयत्रापि समानत्वात्। अत्र यतीनामौद्देशिकभोजनग्रहणे यथाछन्दा युक्तिं दर्शयन्ति—पूर्वं हि बहवोऽत्यन्तं दानश्रद्धालवः श्राद्धा अभूवन्, तेन यतीनां प्रासुकैषणीयेनापि भैक्ष्येण निराबाधं निर्वाहोऽभूत्, इदानीं दुष्षमाकालदोषात् दरिद्रतां भक्ततां च गच्छत्सु श्राद्धेषु ऐदंयुगीनमुनीनां तथाविधशक्तिसंहननविकलानां शुद्धेन भक्तादिना संयमनिर्वाहाभावे यदि कश्चिच्छ्रद्धालुस्तीर्थाविच्छेदमिच्छुः श्राद्धः साधु सङ्घनिमित्तकृतभक्तादिनाऽपि धर्माधारं शरीरमवष्टम्भयेत् तदा को दोषः ? आत्मा च यतिना यथा कथञ्चन रक्षणीयः, तस्माद्यतीनामाधाकर्मिकभोजनमदुष्टं, संयम-शरीरोपष्टम्भकत्वात्, कल्पग्रहणवच्छुद्धभोजनवद्वा। तथा यतिभिराधाकर्मिकभोजनं विधेयं, श्राद्धश्रद्धावृद्धिहेतुत्वात्, धर्मदेशनवदिति प्रयोगावप्युपपद्येते १। तथा ‘जिनानां’ अर्हतां गृहं, तत्र ‘वासः’ सर्वदाऽवस्थानं। ये कश्चित्सुखशीलतयोद्यतविहार कर्तुमशक्नुवन्तो यतीनां चैत्य एव सदाऽवस्थानं युक्तमिति प्रतिपेदिरे, ते प्राहुः—तस्मात् इदानीं जिनगृहवास एव साधूनां सङ्गतः प्रतिभाति, न च तत्राधाकर्मिकादयो दोषाः, तीर्थकरार्थं कृतत्वात्। चैत्यम्—इदानीन्तनमुनीनामुपभोगयोग्यं, आधाकर्मिकदोषरहित त्वात्, शुद्धाहारवदित्यादि। तदेव सम्यक्तया विमृश्यतां विदुषां किं चैत्यमात्र एवैदा

मीन्वनमुनिनां सङ्गतिमङ्गति २। तथा वसत्यक्षमेति, वसतौ—परगृहे निवासं प्रति अक्षमा—मात्सर्यं, आधाकर्म—स्त्रीसंसक्त्यादिदोषजालरहितजिनगृहवासलाभे आधाकर्मिक वसतिवासस्य अत्यन्तमनुचितत्वात्। को हि नाम पथ्याशनप्राप्तावपथ्यमभीयात्, तस्मात्परगृहवसतिरसमीचिनाऽधुनातनयतीनां। यच्चागमे परगृहवासः श्रूयते स तात्कालिकसात्त्विक यति अस्यपेक्षयेति ३। तथा 'स्वीकारः' स्वायत्तापादनं, कस्य? इत्याह—'अर्थो' द्रविणं 'गृहस्थः' श्राद्धः 'चैत्यसदन' जिनगृह ततोऽर्थश्चेत्यादि द्वन्द्वः, तस्य। तत्र द्रव्यस्वीकारस्यागमे निषिद्धत्वेऽपि साम्प्रतयतीनां तत्स्वीकारो युक्तः, स विना ग्लान-परचक्र दुर्भिक्षाद्यवस्थायां भैषजपथ्याद्यनुपपत्तेः। प्रायेण गृहमेधिनां कालदोषात्निर्धनत्वेन निर्दयत्वेन च यतिचिन्ताद्यविधानात्, तेनार्थस्वीकारः साम्प्रतिकमुनीनां सङ्गत इवाभातीति ४। तथा श्रावकस्वीकारोऽपि अद्यतनमुनीनामुत्सर्गापवादपदविदुरार्णां न निर्युक्तिकः। पूर्वं हि कालस्य सौख्यादतिभयवस्तुत्यधाहुल्याज्जैनमतबाह्या अपि जनाः श्वेताम्बरभिक्षुभ्यः सबहुमान भिक्षादिक चितेरुः, साम्प्रतं तु जैनमार्गवैमुख्येन तेषां तथाविध श्वेताम्बरविरसापा अभावात, अतः श्राद्धस्वीकारं बिना भिक्षाऽवाप्तेरप्यनुपपत्तेर्युक्तः सम्प्रति श्राद्धस्वीकारः ५॥ तथा चैत्यस्वीकारोऽपि मुनीनां समीचीनः, सम्प्रति गृहस्थानां चैत्यचिन्तां प्रति निरवधानतया यतिस्वीकारमन्तरेण कालेन तद्भ्रंश सम्भवात् मार्गलोपप्रसङ्गेन चागमे त्वर्थापत्त्या तत्स्वीकारस्याभिधानात् ६। तथा न विद्यते 'प्रेक्षित' चक्षुपानिरीक्षण, आदिशब्दात्प्रमार्जनं रजोहरणादिना यत्र तदासन विष्टर स्यूतगल्लिकादौ शुषिरगम्भीरसिंहासनादौ च प्रत्युपेक्षणादि यतीनां न युज्यति, तेन च तत्र न कल्पते उपवेष्टुं। चैत्यवासिनस्त्वेवं प्रतिपद्यन्ते—प्रवचनप्रभावनाहेतोस्तादृशासनोपवेशनस्यापि साधितत्वात्, प्रवचनप्रभावनायाः प्रधानदर्शनाङ्गत्वेन यथाकथञ्चन विधेयत्वात्। ततः सिद्धमिदं—आचार्याणां गल्लिकाद्यासनमुपादेयं, प्रवचनप्रभावनाङ्गत्वात्, सम्यक्त्वादिप्रमाणशास्त्राध्ययनवत् ७। तथा 'सावद्यं' सपापं 'आचरितं' आचरणा, तत्र 'आदरः' आग्रहः। आचरणा हि निरवद्यैव प्रमाणं, एषा तु सावद्या, गृ[हि]ह (?) दिग्ध-बाधाचरणाद्यभ्युपगमे यतेस्त्रिविधत्रिविधेनानिसिद्धपापारम्भानुमत्यापत्तेः, तथा ह्येषा चैत्यवासिभिरादृता, यतस्तेषामयमाशयः—प्रायेण सम्प्रतितन—यतीनां गृहस्थान्योऽन्याकाङ्क्षया कलहेनाव्यवस्थया सर्वमसमञ्जसमापद्यते, तस्मादेषाऽप्याचरणाऽद्यतन कालापेक्षया युक्तिमतीति ८। तथा 'श्रुतस्य' सिद्धान्तस्य 'प-या' मार्गस्त्वनादरः। ते ह्येवमाहुः—भगवत्सिद्धान्तो हि नैकान्तनिष्ठो, विहितानामपि केषाञ्चिदनुष्ठानानां कथञ्चिन्निषेधात् निषिद्धानामपि कथञ्चिद्विधानात्, अतो न आस्थां कृत्वा सकलया सिद्धान्तव्यवस्थया किमपि कर्तुं परिहर्तुं वा पार्यते, तेनागमबहिष्टाऽपि काचित्सुकुमार

क्रिया भयतनसाधुप्रवर्तिता विवेकिनां निःश्रेयसाय भविष्यति, किं बहुनेति ९। तथा 'गुणिषु' ज्ञानादिमत्सु यतिषु 'द्वेषधीः' मात्सर्यबुद्धिः, स्वयं निर्गुणानां तद्गुणानसहिष्णूनां तदुपजिघांसया दुष्टा मतिरिति एते च परगृहवासिनो धार्मिकमन्या आत्मानमेवैक गुणैरुत्कर्षयन्तो निखिलानप्यपरान् दूषयन्त ऐदंयुगीन सङ्घमप्यवमन्यमाना आत्मसम्प्रवृत्तिं दूरेण परिहरन्तो लोकव्यवहारमप्यजानानाः सङ्घबाह्या एव, अतस्सर्वथैवैते उच्छेत्तव्याः, द्वेष एवैषु श्रेयान् १०।

"गौतमादिषु वर्तित्वा–स्वाश्लेषु यतिष्वमी। कथमेतेषु वर्तेत ?, निर्गुणेष्वसत्स्वेति चेत् ? ॥१॥"
"कल्पयोनिरहां यद्वद्, गुणायोगेऽपि वन्द्यते। भिक्षादिषु तथाप्यामो,बिना विप्रतिपत्तितः ॥२॥"
"यथा च भास्वरत्नानां, गुणाभावेऽपि तादृशाम्। काले साम्प्रतं चारचिन्त्ये, मणिशब्दः प्रयुज्यते"
"गौतमादिगुणायोगे–ऽपीदानींतनसाधुषु। व्यवहारस्तु सद्भावेन, श्रमणस्येति यतिष्वपि ॥४॥"

इति यास्तव क्षान्त्यादिदशविधयतिधर्मस्पर्द्धयैव यथाछन्दैः प्रदर्शितो धर्मोऽयं चेत्कर्महरो भवेदित्यादि पूर्वव्याख्यातमिति वृत्तार्थः ॥ ५ ॥

इदानीमेतानि दशद्वाराणि यथाक्रमं कथयन् प्रथमं तावज्जीवोपमर्दायनेकदोषप्रकटनपूर्वमौद्देशिकभोजनद्वारं प्रत्याख्यातुमाह—

षट्कायानुपमृद्य निर्दयमृषीनाधाय यत्साधितं ॥ ६ ॥

व्याख्या—कः 'सघृणो' दयालुर्विदन्–सङ्घादिनिमित्तमेतदभिप्यन्नमिति जानन् इहेति प्रवचने 'विषवस्तु' भोक्तुमिच्छति ?। "अदः सनन्तस्य षत्वादेशे रूपं"। किं तत् ? 'सङ्घः' साधुसाध्वीरूपः श्रमणगणः आदिशब्दादेककतिपयादिश्रमणपरिग्रहः, तस्य भक्त– वत्कृते निष्पन्नमशनादि, नामेति कुत्सायां, अतीव कुत्सितमेतद्भक्तं यतीनां, जानतो मुनेः कृपालोरेव विषं भक्तं भोक्तुं न कल्पत इत्यर्थः। कथं तत्कुत्सितं ? अत आह– यत्साधितं, तच्छब्दस्य यच्छब्देन नित्याभिसम्बन्धात्, ततश्च यद्भक्तं 'साधितं' निष्पादितं, गृहस्थेनेति शेषः। किं कृत्वा ? 'आधाय' उद्दिश्य, कान् ? 'ऋषीन्' यतीन्, यतिभ्यो मयैतद्देयमिति चित्ते कृत्वेत्यर्थः। अथ निरवद्यवृत्त्या यतिनिमित्तं कृतेऽप्यस्मिन् को दोषः ? इत्याह–'उपमृद्य' विनाश्य 'षट्कायान्' पृथिव्यप्तेजो वायु–वनस्पति–त्रसाख्यान् षड्विधजीवनिकायान्। कथमुपमृद्य ? इत्याह–निर्दयमिति क्रियाविशेषण। ननु भवत्वेतदयथार्थं साधितं कुत्सितं, तथापि सिद्धान्तानिषेधाच्च

दृश्यतीत्याह–' शास्त्रेषु ' ग्रन्थेषु निशीथादिषु ' प्रतिषिध्यते ' यतिभोज्यतया निवार्यते यदुक्तं, कथं ? असकृत्–अत्यन्तदुष्टतास्थापनाय मुहुर्मुहुः, तथा च आहारोपधि–वसत्या धाकर्मविचारावसरे निशीथेऽभिहितं—

" एय सामन्नयरं, आहाकम्म तु गिण्हए [भुंजइ] जोउ ।
सो आणा अणवत्थ, मिच्छत्तविराहणं पावे ॥१॥" तथा पिण्डनिर्युक्तावपि—

"आहाकम्मं भुंजइ न पडिक्कमए य तस्स ठाणस्स। एमेव अडइ बोडो,लुक्कविलुक्को जह कवोडो ॥ २ "

दशवैकालिकनिर्युक्तावपि—

" परिहरइ भुंजइ उज्झसपमरणे परं कुणइ । पयकर्म च अकाए,जो पीअइ कहन्नु सो साहू ?॥३॥"

नन्वस्तु एवमागमनिषेधः तथापि तस्य मुनिना स्वयमकृताकारितानुमतत्वाच्च तद् ददानस्य तस्य मुने: को दोषः ? इत्याह–'निस्सिंकतो' निश्शङ्कतां–निर्दयत्व 'आयरे' करोति यत्तदाधायि–निश्शूकताकारकं यदुक्तं । अयं भावः–स्वयमकृतमप्याधाकर्म जानन् गृह्णानो मुनिर्भक्तिमत् गृहिणः प्रसङ्गतस्सजनात् अत्यन्तमृजुनिश्शूकत्वेन सचित्तमपि न जह्यात्, अतः कथं न दोषः ?, तदुक्तं—

"सव्व तइवि मुणतो, गिण्हतो वड्ढए पसंगं से । निद्धंधसो य गिद्धो न मुयइ सचित्तं पि सो पच्छा॥१

अत एव अत्यन्तम् एतत् निराकरिषया गणधरा आनुरूप्येण–उपमानानि दर्शयामासुः । तथा चाह–गोमांसादीति, गौः–सुरभेर्मांसं, आदिशब्दात् वान्तोच्चारसुरा ग्रहः तैरुपमा सादृश्यं यस्य तत्तथा । यदुक्तमाहुः–सुधर्म गणधराः, यथाहि गोमांसभक्षणं लोकधर्मविरुद्धत्वेन महापापहेतुत्वादत्यन्तनिन्दितत्वाच्च विवेकिना सर्वथा हेयं, तथाऽऽधा कर्मभक्तमपि, एवं वान्तादिष्वपि यथायुक्तमर्थं योज्यं । अधपति प्रकारान्तरे, यदुक्तं भुक्त्वा मुनिर्याति–गच्छति 'अधो'ऽधस्तात्, संयमादिति ज्ञेयं, अथवा अधोगति–नरकं । अत्र च वृत्ते एक वाक्यस्थेनैव यच्छब्देन सकलवाक्यार्थे दीपिते यत्प्रतिपदं यच्छब्दो पादानं तस्मदादिभक्तस्यात्यन्तपरिहरणीयता स्थापनार्थं । यस्मादाचार्यैः–इदानीन्तन कालापेक्षया यतीनामाधाकर्मभोजनमपीष्यते तदनुमानाभ्यां निषिध्यते, तथाहि–यतीना माधाकर्मभोजनमनुपादेयं, षड्जीवनिकायोपमर्दं निष्पन्नत्वात्, तथाविध वसत्यादिवत् । तथा यतीनामाधाकर्मभोजनमभोज्यं, धर्मलोकविरुद्धत्वात्, गोमांसादिवदिति । एवं चोपपन्नमेतत्–सद्धादिभक्तं यतीनां न भोक्तव्यमिति वृत्तार्थः ॥ ६ ॥

इदानीं देवद्रव्योपभोगदूषणप्रदर्शनद्वारेण जिनगृहवासनिराकरणायाह—

गायद्गन्धर्वनृत्यत्पणरमणिरणद्वेणुगुञ्जन्मृदङ्ग ।

व्याख्या—वस्तुनिश्चये, जिनगृहे 'अर्हन्मतज्ञा' भगवदागमनिपुणा यतयो नैव वसन्ति, यदागमे तत्र निवासस्यात्यन्तं निवारणात्, मन्तो-विवेकिनः । कुतः ? इत्यत आह—'सती' शोभनाऽकृत्रिमा भक्तिः तस्या 'योग्यं' उचितं, तस्मिन्, भक्तिरेव यतस्तत्र कर्तुं युज्यते । भक्तियोग्यतामेव विशेषतो विशेषणद्वारेण दर्शयति—गायदि त्यादि, गायन्तो-भगवद् गुणानत्युत्कीर्तयन्तो 'गन्धर्वाः' प्रधानगायना यत्र तत्तथा, नृत्यन्ती-नाट्यशास्त्रोक्तक्रमेण करचरणादि-अङ्गविक्षेपं कुर्वती 'पणरमणी' वारस्त्री नृत्यकी यत्र तत्तथा, रणन्तो-मुखमरुतामिघातान्मधुरं ध्वनन्तो 'वेणवो' वंशा यत्र तत्तथा, गुञ्जन्तो-मार्दङ्गिकैः पाणिभ्यां ताडनाद् गम्भीरं स्वनन्तो 'मृदङ्गा' मर्द[ मुर ]जा यत्र तत्तथा, प्रेङ्खन्त्यो-कम्पमानत्वात् मन्दपवनेन कम्पमाना देवसेवार्थं विरचिताः 'पुष्प स्रजः' पुष्पमाला यत्र तत्तथा, उद्यत्-भगवत्प्रतिमा विलेपनार्थं विमर्दनसमुच्छलद्रूप द्वारेण प्रसरन्मृगमदः-कस्तूरिका यत्र तत्तथा, लसन्तः-पद्मरागकमयत्वान्मुक्ताफलादि विच्छित्ति युक्तत्वाच्च दीप्यमाना उल्लोचा-चन्द्रोदया यत्र तत्तथा, चलन्तो-महाघन पत्राङ्कारालङ्कृतशरीरत्वात् भ्राजिष्णवो 'जनौघाः' श्रावकसङ्घा यत्र तत्तथा, ततश्च गायद्गन्धर्वे च तद्नृत्यत्पणरमणि चेत्यादि कर्मधारयस्तस्मिन् । एतानि हि भगवद्गुण गानादीनि प्रकाराणि जिनगृहे भक्तिहेतुकानि, भव्यानां शुभभावोल्लासहेतुत्वात् महात्मभिः क्रियन्ते, अथैवंविधे भक्तियोग्यजिनगृहे किमिति साधवो न निवसन्ति ? अत आह—'नमन्तो' बिभ्यन्तः, कुतो ? देवद्रव्यस्य 'उपभोगः' सततं तत्र शयनासनभोजनादि करणेन उपयोगः तथा 'ध्रुवा' शाश्वती-यावज्जीवं अथवा 'ध्रुवं' निश्चितं 'मठो' जिनगृहजगतीसम्बद्धो यतिनिमित्तनिष्पन्न उपाश्रयस्तस्य 'पतिता' स्वामित्वस्य-जिन गृहलग्नकोष्ठागारादिभिश्च कर्मान्तरादि सकलचिन्ताकारित्वेनाधिकारित्वमिति यावत् । तथा भगवत्प्रतिमा-अग्रपादपर्षो भोजन-शयनासन-निष्ठीवनाद्यविधिकरणेन महत्याशातना भवति, ततश्च देवद्रव्योपभोगेत्यादि द्वन्द्वः । तेभ्यः । अथ गृहिणा भगवन्निमित्त स्व द्रविणेन निर्मापिते देवगृहे वसतो देवद्रव्यं कनकादिकमनुपभुञ्जमानस्य यतेः कथं देव द्रव्योपभोगः ?, जिनद्रव्यनिष्पन्ने हि तत्र निवसतस्तद्द्रव्यं साक्षाद्भुञ्जानस्य गृण्हतो वा भ स्यादिति चेन्न, गृहिणा स्वद्रव्यनिर्मापितस्याऽपि तस्मिन् देवाय कृतत्वेन देवद्रव्यत्वात्, तथा च तत्र वसतः साक्षाद्यदनमनुपभुञ्जानस्यापि मुनेर्देवद्रव्योपभोगोपपत्तेः, साक्षादेव द्रव्यनिष्पन्ने तु का वार्ता ? इति यतिभिर्जिनगृहे न वासः कार्य इति वृत्तार्थः ॥ ७ ॥

इदानीं जिनाद्यासेवितत्वेन सिद्धान्तोक्तत्वेन च यतीनां परगृहवसतिं व्यवस्थापयन् वसत्यष्टमा द्वारं काव्यद्वयेन निरसिसिषुराह—

साक्षाज्जिनैर्गणधरैश्च निसेवितोक्तां ॥ ८ ॥

निर्ग्रन्थोत्सर्गोपवादे पदमिह शिवपुरीदूतभूते निशीथे ॥ ९ ॥

व्याख्या—कः सकर्णः पुमान् 'परगृहे' गृहस्थगृहे 'वसतिं' निवासं 'विद्वेष्टि' मात्सर्यात् न क्षमते-निषेधयति ? मुनिपुङ्गवानां-सुविहितयतीनां, न कश्चिदित्यर्थः। अयमर्थः-अकर्णो हि कर्णौ विना सिद्धान्तोक्तामपि परगृहवसतिमनाकर्णयन् द्विष्यादपि, यः पुनः 'सकर्णः' सश्रवणः अथ च सहृदयः-परगृहवासचैत्यवासयोर्गुणदोषविचारचतुर इति, स परगृहवसतिं यतीनामनुमोदयत्येव, न तु द्वेष्टि। किंरूपां वसतिं ? 'निषेविता' च सोक्ता चेति कर्मधारयः। कथं ? 'साक्षात्' प्रत्यक्ष-स्वयमित्यर्थः। कैः ? जिनैः-तीर्थकृद्भिर्गणधरैः-गौतमस्वामिप्रभृतिभिः। चः समुच्चये। जिनादिभिरुक्ता, तां। तथा सज्यते सज्यते अनेनाऽस्मिन्निति सङ्गः—गृह धन-कनक तनय वनिता स्वजन-परिजनादिपरिग्रहः, निर्गताः सङ्गात् निःसङ्गास्तेषां भावस्तत्ता, तस्या 'अग्रिमं' मुख्यं 'पदं' स्थानं मुनीनां परगृहवसतिः, अथवा निस्सङ्गतायाः 'अग्रिमं' मौलं 'पदं' लक्ष्म-लिङ्गमित्यर्थः "पदं व्यवसितत्राण-स्थानलक्ष्माङ्घ्रि वस्तुषु" इत्यनेकार्थवचनात्। निस्सङ्गता हि मुनित्व लक्षणं, बहिरिव दाराद्याक्रान्तिसाम्राज्यस्य, तस्याश्च लिङ्गं परगृहवसतिः, नहि स्वाधीने विभवे विद्वान् कश्चित्परगृहाश्रीतेति। अत्र च पदशब्दस्याभि[ लि ]ङ्गलिङ्गत्वाच्च विशेष्यलिङ्गता किं कुर्वन् विद्वेष्टि ? इत्यत आह-'आनन्' आगमवचनेनानवबुध्यमानः। कां ? शय्यातर इत्युक्ति-भाषा, ताम्। सिद्धान्ते हि शय्यातर इति भाषा श्रूयते, न चासौ भाषूनां परगृहवास विनोपपद्यते, तथाहि-'शय्यया' वसत्या यतिभ्यो दानं, तया तरति संसारसमुद्रमिति शय्यातरशब्दार्थः, परगृहवसतिं विना यतीनां न कश्चि त्साधुशय्यादानं पतेत, न च तत्समस्तीति शय्यातरशब्दस्य स्वार्थालाभे निर्विषयत्वा पत्त्या सिद्धान्त प्रतिस्थानमुच्चारणं कथमिव शोभां बिभृयात् ?, तस्मादागमे शय्यातर शब्दश्रुतेरपि परगृहवसतिर्मुनीनां ज्ञायते। तथा अनगारपदं च, आनमिति सम्बध्यते। चः समुच्चये। न विद्यते 'अगारं' गृहं यस्यासौ अनगारः, तस्य अनगार इति पद व्यपदेशः, श्रुतं ह्यनगारपदं यतिवाचकं प्रतिपदं श्रूयते तच्च तेषां स्वागाराभावेन परा गारवासेन च सङ्गच्छते। अन्यथा स्वागारसद्भावे चैत्यवासे वा यथाक्रमं यतेर्गृहपति-मठपति-व्यपदेशप्रसङ्गात्-नगारपदस्यैव पर्यायमापद्येतेति। ननु यदि हि समागमे चैत्य

वासोऽन्तमिमतः स्याद्यदा परगृहवसतिः लभ्येतापि, यदा तु तत्र कश्चिदेत्यवासे कथितेऽपि हठेनैव भवद्भिः परगृहवसतिरास्थीयते, तदा कथं लभ्यते ? इत्याह– चित्रोत्सर्गेत्यादि, यदस्मात् इहप्रवचने 'निशिथे' प्रकल्पाध्ययने पञ्चमोद्देशकादौ विरूभूते ? सामान्यविधिरुत्सर्गः विशेषविधिरपवादः । उत्सर्गश्चापवादश्चेति द्वन्द्वः । ततश्च 'चित्रौ' नानाविधौ वसत्यादिगोचरावुत्सर्गापवादौ–सामान्यविशेषविधी यत्र स तथा, तत्र तथा 'शिवपूर्यां' मोक्षनगर्यां 'सूत्रसूता' सन्देशहरसदृक्षस्तत्र, सूत्रशब्दस्यात्र सदृक्ष–वाचित्वात्, 'प्राक्' प्रथम 'उक्ता' प्रतिपाद्य 'भूरिभेदाः' प्रभूतप्रकारा 'गृहिगृह वसतीः' गृहस्थसदनरूपोपाश्रयान् पश्चात्–चरम कारणे तथाविधवसत्यलाभलक्षणे इती 'अपोद्य' अपवादविषयीकृत्य, वा यथेति गम्यते । अयमर्थः–निशीथ पूर्वमौत्सर्गिका वसतिभेदा यतिवासयोग्यत्वेन कथिताः, ।

यथा—

" मूलुत्तरगुणविसुद्धं, थी–पसु–पंडग विवज्जियं वसहिं ।
सेविज्ज सव्वकालं, विवज्जए हुंति दोसाओ ॥ १ ॥

" विच्छिन्ना सुहठिया, पमाणजुत्ता य तिविह वसहीओ ।
पढमबीयासु ठाणे, तइय य दोसा इमे हुंति ॥ २ ॥

तथा साध्वीरुद्दिश्योक्तं—

"गुत्तागुत्तदारा कुलपुत्ते सत्ति–मंत–गंभीरे । भीयपरिस्समद्दविए, अज्जा सिज्जायरे भणिए ॥१॥

" पच्चइहासकवाडा, सागारियमगिणिमाइ पेरंता ।
निप्पच्चायभोगा, विच्छिन्नपुरोहडा ( पश्चाद्गृहकाः ) वसही ॥ २ ॥

तदलाभे यथायथा एतापवादोदिताः । यथा–द्रव्यप्रतिबद्धायामपि वसतौ कारणे न वस्तव्य, यथा चाह—

" अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असईए ।
गीयत्था जयणाए, वसंति तो दव्वपडिबद्धे ॥ १ "

' सद्दे आभरणविही, वत्थालंकारभोयणे गंधे ।
आउज्ज–नट्ट–नाडय, गीए सयणे य दव्वम्मि ॥ २ ॥ "

" अद्धाणमिमाणाई, तिक्खुत्तो भग्गिऊण असईए ।
गीयत्था जयणाए, वसंति तो इत्थ सागरिए ॥ ८ ॥ "

" अद्धाणनिग्गयाई, वासे सावयमए व तेणभए ।
आवलिया तिविहे वी, वसंति जयणाइ गीयत्था ॥ ९ ॥ "

इय यतना स्त्रीसंसक्तवसतिमधिकृत्योक्ता । पशुपण्डकसंसक्तायामपि वसतौ वसताम् एतदनुसारेण सम्भविनी यतना द्रष्टव्या, तदयमर्थः—स्त्रीसंसक्त्यादि सम्भवेऽप्येव विध यतना सावधानानां मुनीनां तज्जन्या दोषाः प्रादुष्यन्ति सर्वत्रेति, सर्वस्मिन् अपि वसत्यधिकारप्रद्योतेऽधिकारो । नन्वेवं यतनावतां चैत्यवासेऽपि को दोष ? इत्यत आह न तु, 'तु' पुनरर्थेऽवधारणे वा, तेन न पुनर्नैव वा 'मत' इष्टः क्वापि उद्देशकादौ चैत्यजिन गृहे निवासो निवास इत्युभयत्र योज्यते, एतदुक्तं भवति—यदि हि चैत्यवासो यतीनां कश्चिन्मतः स्यात् तदा स्त्रीसंसक्त्यादि युक्त इव गृहे वसतां, तत्रापि काञ्चित् यतनां ब्रूयात् न चैव, ततोऽवसीयते—अगारिणामन्येव संयतां—यतीनां वासो, न चैत्य इति । तस्मात् न सद्धर्मेण तद् द्वेषो विधेय इति काव्यद्वयार्थः ॥ ९ ॥

साम्प्रतमर्थाधिकार—गोचरस्वीकार—द्वारत्रयमेकवृत्तेनाह—
प्रव्रज्याप्रतिपन्थिनं न तु धनस्वीकारमाहुर्जिनाः, ॥ १० ॥

व्याख्या—नविरत्यक्षमायां, न सम्मतं एतत्, यदुत—साधूनां धनस्वीकार इति, यतो 'धनस्वीकारं' द्रव्यसङ्ग्रहं 'आहुः' ब्रुवन्ति जिनाः, अत्र जिनानाम् इदानी मतीतत्वेनोपदेशासम्भवात् 'आहुः' इत्यत्रातीतविभक्तिमाश्रावपि यद्वर्तमानकथनं तदेषां स्वागमैः ग्रन्थसङ्ग्रहविपाकप्रतिपादकैः एकरूपतयाऽद्य यावदनुवृत्तिमिग्मेवाध्यवसायेन वर्तमानतयाऽवभासात् तदुपदेशदानप्रदर्शनेन शिष्याणां धनस्वीकारं प्रत्यतिविहीर्षा यथा स्यादिति ज्ञापनार्थं एवं उत्तरपदेऽपि योज्यम् । कीदृशं ? 'प्रव्रज्यायाः' सर्वसङ्ग-त्यागरूपाया दीक्षायाः 'प्रतिपन्थिनं' विरोधिनं, विरोधश्चात्र वध्यघातकलक्षणः तथाहि—द्रव्यसङ्ग्रहो मूर्च्छापरिणामः प्रव्रज्या च तद्विरतिपरिणामः तयो चात्र बलवता मूर्च्छापरि णामेन तद्विरतिपरिणामो बाध्यत इति तथा 'सर्वारम्भिणां' सकलसावद्यारम्भप्रवृत्तानां गृहिणां परिग्रहो मूर्च्छाहेतुः मामकत्वबुद्धिः स तथा, तं । तुशब्दोऽर्थस्वीकारात् अस्य भेदप्रदर्शनार्थः । अतिशयेन 'महासावद्य' महापापं 'आचक्षते' वदन्ति, जिना इति पूर्वस्मात् अनुकृष्यते । अत्र चाहुरिति क्रियाऽनुवृत्त्यैव भावपक्षिद्धावाचक्षत इति पुनरभिधान

द्वारान्तर-निराकरणमेतदिति ज्ञापनार्थम् । अयमर्थः—गृहिपरिग्रहे हि तत्कृतकारितादि सकलमहारम्भ-महापरिग्रह-जनितपापानुमत्यादिना यतीनामपि तत्कृतादिनिखिलपाप प्रसङ्गोऽत्र कथं तस्य नातिमहासावद्यता ?, परकृतमहापापस्यात्मन्यध्यारोपणमेव चातिदुष्कार्यः । तदुक्तं—"आरम्भनिर्भरं गृहस्थपरिग्रहेण, तत्पातकं सकलमात्मनि सन्दधानाः । तस्मात् पतन्त्य-हहा ! तस्करमोषदोषं, मात्म्यनिग्रहमय सितभिक्षुपाशाः ॥ १ ॥" इति । अतएव गृहिपरिग्रहो यतीनां प्रायश्चित्तापत्त्या श्रुते निवारितः, यदुक्तं "ओसन्न-गिहिसु लहुगो" इत्यादि । एतेन गृहिस्वीकारं प्रति परपरस्य पूर्वं हि कालस्य सौस्थ्यादिना मुख्यमभिधानं तदपि निरस्तम् । कालदोषात् कुतीर्थिकादि-भूयस्त्वेऽपि गृहिस्वीकारमन्तरेणापि मण्डकादि भोज्येभ्यो यतीनामधुनाऽपि भिक्षादिप्राप्त्युपपत्तेः, अतः केवलं औदरिकत्वापत्त्याऽतीवोपहासपदं विदुषां तदर्थस्तत्स्वीकार इति । योऽपि "जा जस्स ठिई जा जस्स संचिइ पुव्वपुरिस कय मेरो सो तं अइ कमतो अनंत संसारी उ होइ ।" इत्यागमोपन्यासः सोऽपि न भवदभिमतप्रसाधकः, अन्यार्थत्वात्, न हि गृहि परिग्रहसाधकोऽयं प्रक्रमः, किन्तु गणधरादीनां शिष्य-प्रतिशिष्यपरिग्रहविषयः, तथाहि—या काचित् यस्य गणधरशिष्यप्रतिशिष्यादेः स्थितिः—प्रतिक्रमणवन्दनादौ न्यूना धिक-क्षमाश्रमणदानादि-लक्षणा सामाचारी, या वा यस्य सन्ततिर्गुरुपारम्पर्येणालोच नादि दानविषयः सम्प्रदायः, या च पूर्वपुरुषकृता गणधरादिप्रवर्तिता 'मेरा' मर्यादा-गच्छव्यवस्था, तामतिक्रामन् अनन्तसंसारिको भवतीति, अत्र हि गणधरशिष्यादीनां स्वस्वगुरुप्रदर्शित-स्थित्याद्यतिक्रमेऽनन्तसंसारितापत्त्या प्रतिनियतगणधरपरिग्रहविषयत्व मवसीयते, श्रावकाणां तु सर्वधार्मिकगच्छेष्वविशेषेण भक्तपानादि भक्त्यभिधानात् । धर्मगुरुषु तद्गच्छे वा विशेषेण दानभक्तिप्रतिपादनं तेषां कृत्यप्रतीकारतया, न तु तत् स्वीकारविषयतयेति । एवं गृहिपरिग्रहः सर्वथा यतीनां नोचित इति ५ । तथा 'चैत्यस्य' जिनगृहस्य 'स्वीकरणं' स्वायत्ततापादनं, तत्र । तुरत्रापि प्रथमद्वारादस्य भेदमाह—' गर्हिततमं ' अत्यर्थं सकलचैत्यकृत्यचिन्ता तद्द्रव्योपभोगादिना लोकेऽप्यति निन्दितं ' माठपत्य ' मठनायकत्वं ' स्यात् ' भवेत् ' यतेः ' मुनेः । एतदुक्तं भवति—चैत्यस्वीकारे हि यतीनां तच्चिन्तनं सकलमनुष्ठेयं, तच्च आरम्भदोषवत्तया द्रव्यस्तवत्वेन यतीनां निवारणात्, एवं च स्वमेव परिभाषय मार्गानुसारित् या मुक्त्वा यथाच्छन्दतया चिकार्यं चिन्तयतः कथं माठपत्यमतिहसितं न प्रसज्यते ? इति । लौकिका अप्याहुः—तथा—" यदीच्छेन्नरकं गन्तुं, सपुत्रपशुबान्धवः । देवेष्वधिकृतिं कुर्यात्-गोषु च ब्राह्मणेषु च ॥ १ ॥ तथा " नरकाय मतिस्ते चेत्, पौरोहित्यं समाचर । वर्षं यावत्किमन्येन, माठपत्यं दिनत्रयम् ॥ १ ॥ ६ ॥

इदानीं निगमयति–यस्मात् अर्थे यस्मात् एव–मित्युक्तक्रमेण 'भववैरिणी' चारित्र–प्रतिपन्थिनी, इति हेत्वर्थे भिन्नक्रमः स चाग्रे योक्ष्यते, ममता–अर्थादिषु स्वीकारबुद्धिः, इति यस्माद्धेतोर्न युक्ता–नोपपन्ना–'मुक्स्यर्थिनां' निर्वाणाभिलाषिणां मुनीनामिति वृत्तार्थः ॥ १–१० ॥ ६ ॥

साम्प्रतम् असंयमादि–दोषप्रदर्शननाप्रेक्षितायासन–द्वारं निराकर्तुमाह—

भवति नियतमत्रासंयमः स्याद्विभूषा ॥ ११ ॥

व्या०—'भवति' जायते 'नियतं' सर्वदा 'अत्र' गन्दिकाद्यासनेऽसंयमो जीवरक्षाऽभावः, गन्दिकादेर्निस्यस्यूतत्वादिना प्रत्युपेक्षणादि अभावे विवरादिना तदन्तः प्रविष्टानां तदन्तर चोत्पन्नानां वा त्रसादीनां तत्रोपवेशनेन विनाशसम्भवात्। भिक्षोरिति वृत्तमध्यस्य पद सर्वत्र सम्बध्यते। 'स्यात्' भवेत् 'विभूषा' शोभा, तत्रोपविष्टस्य जगतोऽप्युपरिवर्त्त्यहमिति विभूषा कार्यमिमानप्रवृत्तेः, विभूषा च यतीनामवश्यं वर्जनीया, यदुक्तं—"विभूसावत्तियं भिक्खू, कम्मं बंधइ चिक्कणं। संसारसायरे घोरे, जेण पडइ दुरुत्तरे ॥ १ ॥" इति। 'नृपतेः' राज्ञः 'ककुदं' चिह्नं, राजादीनामेव प्रायेण महर्द्धिकानां तत्रोपवेशन–दर्शनात्। 'लोकहासो' जनतोपहासनं, चशब्दो दोषसमुच्चये। 'भिक्षोः–यतेः' अहो !! भिक्षोपजीविनो मुण्डिता अपि एवंविधासनमुपविशन्तीत्यादि दुर्जनवचनश्रवणात् 'स्फुटतरो' लोकप्रकटः। इह गन्दिकादौ 'सङ्गः' परिग्रहो महाधनत्वेन मूर्च्छाहेतुत्वात् 'सातशीलत्वं' सुखलालसत्वं,' तदन्तरेण हंसरूतादिपूर्णेषु सुस्पर्शेषु तथाविधासनेषु यति मनुचिततया सिद्धान्तनिषिद्धेषूपवेशोऽसम्भवी, तथै–रतिक्षयेन, इति हेतौ। एभ्यो हेतुभ्यो 'न भवतु' नैव, स्वल्परम्भारम्भे मुमुक्षो–मोक्षार्थिनो यतेः 'सङ्गत्वं' युक्तियुक्तं गन्दिकाद्यासनं, उपभोगगतमिति शेषः। लोकप्रसिद्धो रूतादिभृत आसनविशेषो गन्दिका। आदिशब्दात्–मसूरसिंहासनादिपरिग्रहः। एतेन यदपि "नाणाहिओ वरतरं" इत्याद्यागमबलेन प्रवचनप्रभावनाङ्गतया यतीनां गन्दिकासिंहासनादि–आसनोपवेशनसमर्थनं तदपि सुखशीलताविलसितं। सर्वेषां यतीनां गन्दिकाद्यासनमनुपादेयं, असंयमहेतुत्वात्, आधाकर्मिकभोजनवदिति वृत्तार्थः ॥ ११–७ ॥

साम्प्रतं सनामोचार–सावद्यापरिताभिधान–पुरस्सर–तद्दोषप्रदर्शनेन श्रावक्य–परिवादारं निरस्यन्नाह—

गृही नियतगच्छभाग् जिनगृहेऽधिकारो यतेः ॥ १२ ॥ ( पृथ्वी )

व्याख्या—'गतस्य' पूर्वं प्रस्थितस्य कस्यचित् 'अनु' पश्चात् 'गतं' गमनमन्यस्य यत्तद् गतानुगतं, तदेषामस्तीति गतानुगतिकाः। मत्वर्थे इक प्रत्ययस्तद्धितः। अयमर्थः—यथा गड्डरिका। कांचन दिशं प्रतीत्य काञ्चिदेकामविवेकां पुरो गच्छन्तीमवलोक्य तदनुमार्गेण पाश्चात्याः सर्वा अपि तामनुगच्छन्ति, न मार्गस्य सुगम-दुर्गमत्वादिकं मृगयन्ते, तथा जिनप्रवचने सुखलोलतया कञ्चिदेकं प्रमादमार्गे गच्छन्तं वीक्ष्य तच्छीलतयाऽन्येऽपि तद् न्यायान्यायतामविचारयन्तो ये तमनुगच्छन्ति ते संसारपथाभिनन्दित्वात् तथोच्यन्ते, तैर्गतानुगतिकैः—लोकप्रवाहपतितैः—पार्श्वस्थादिभिः 'अद' एतत्सकलजनप्रत्यक्षं गृहिनियतगच्छभजनादिकं सावद्याचरितम्, अस्य सावद्याचरितस्य अनेकविधत्वेऽपि समुदायरूपतयैकत्व विवक्षणात्। कथमिति शेषः "गर्भमकारवचनो निपातः" केन कुत्सित प्रकारेण 'असंस्तुतं' यतीनाम्—अकृत्यतया अपरिचितम् अपि अनुचितमिति यावत्। 'प्रस्तुतं' प्रारब्धमादृतमित्यर्थः। तदेव नाम ग्राहमाह—गृही श्रावको 'नियतं' गच्छान्तरपरिहारेण एकतरं 'गच्छं' आचार्यं प्रतिबद्ध यतिसमुदायं 'भजते' परिगृह्णाति स तथा, गृहिणां नियतगच्छभाक्त्वे हि यतीनामिदानीं सर्वं भक्तपानादि निराबाधं निर्वहतीति धिया तादृश गुरूपदेशेन गृही निमित्तनियतगच्छभाग् भवतीति क्रियापदं यथासम्भवमध्याहार्यं, गृहि नियतगच्छभाक्त्वञ्च यतीनां तद्गतसकलारम्भानुमत्यादिना पापसम्प्रसङ्गेना-संस्तुतं। तथा 'जिनगृहे' देवभवने 'ऽधिकारः' सकलतत्कृत्यचिन्तनं नियोगो 'यतेर्मुनेः', श्राद्धानामिदानीं तच्चिन्तानिरवधानता-व्याजेन अस्य चासंस्तुतत्वं चैत्यस्वीकारद्वार-निराकरणे प्रागेव दर्शितं। तथा 'प्रदेयं' वितरणीयं अशनादि अशनं-भोजनमोदनादि, आदि शब्दात् पानकादिग्रहः 'साधुषु' यतिषु। अत्र च सम्प्रदानेऽपि विषयविवक्षया सप्तमी। 'यथा-तथा' येन तेन प्रकारेण-अशुद्धमपीत्यर्थः। 'आरम्भिभिः' गृहस्थैरधुना केवलेन शुद्धेनाशनादिना निर्वाहाभावादिति, तथा अशुद्धाशनादि दानप्रवर्तनस्य चासंस्तुतत्वम् औद्देशिकभोजननिरसनावसरे प्रतिपादितं। तथा 'व्रतं' सर्वविरतिः, आदिशब्दाद्देशविरति सम्यक्त्वारोपण तदन्तिकगमनादिग्रहः, ततश्च 'व्रतादिविधेः' सर्वविरत्यादि-अभ्युपगमस्य 'वारणं' निषेधः 'सुविहितान्तिके' सुमुनिसमीपे अगारिणां—श्राद्धानां, एतत् देशनापरिणतान्तःकरणा न अस्मदर्थे पीठादिकमपी घटीष्यन्ति इति बुद्ध्या, एतस्य चासंस्तुतत्वं तेषां सुविहिताभ्यासे देशनाकर्णन-व्रतादिनिषेधेन दर्शयामास उत्सूत्रदेशना मसिलताऽलून-विवेकमस्तकतया, तद्धेतुकानिवारित-प्रसरदुर्गतिप्रपाता-पातनात्, अन्यदुर्गति पातनं च यतीनां पापादपि पापीयः। एवं च चिन्त्यमानमाधुनिकमुनीनां सावद्याचरितमागमविरुद्धतायाः कथं न आपटीति ! इति काव्यार्थः॥ १२॥ ८

इदानीं भुवपथा-मथा-ग्रार-निरासमुपक्रमते—

निर्वाहार्थिनमुज्झित गुणलवैरज्ञातशीलान्वय ॥ ११ ॥

व्याख्या—' निर्वाहार्थिनं ' कवलोदरभरणप्रयोजन, न तु संसारनिस्तार काङ्क्षिणं, उज्झितं-हीनं ' गुणलवैः ' क्षमादिलवैरपि, प्रव्रज्यायोग्यो हि पुरुषः क्षमादि गुणवान् भवति, तदुक्त—" पव्वजाए जोग्गा, आरियदेसम्मि जे समुप्पन्ना । जाइ कुलेहि विसिट्ठा, तह खीणप्पायकम्ममला ॥ १ ॥ एव पवइए चिय, अवगय संसारनिग्गु णसहावा । तत्तो य तव्विरत्ता, पयणु-कसायऽप्पहासा य ॥२॥" अय तु क्षमादि अंशेनापि त्यक्तः । तथा 'शीलं' स्वभावः सद्वृत्त च ' अन्वयम ' कुल, शीलं चान्वयश्चेति द्वन्द्वः, ततः अज्ञातौ-अविदितौ शीलान्वयौ यस्य स तथा, त । परीक्षित-शीलकुलस्य हि प्रव्रज्या दानं न्याय्यमितिं, अविदितस्वभावो हि कषायदुष्टादिना कश्चिदपराधे गुर्वादिना शिक्षितः तमपि जिघांसति, एवमज्ञातकुलोऽपि तस्कराद्दिः प्रव्रजितः तच्छीलत्वात् स-तैन्या दिक कदाचिदारचयन् गच्छमपि तुलायामारोपयति, तथा अविदितकुलो दीक्षितः कथमपि कर्मोदयात् दीक्षां जिहासुर्निरङ्कुशतया जहात्येव, कुलीनस्तु कदाचिदकार्यं चिकीर्षुरपि कौलिन्य-सततगुरुशिक्षा-निबिडनिगडनियमितो न करोत्येव । तथा ' मुण्डीकृत ' दीक्षितं ' गुरुणा ' आचार्येण । तादृशि-विनेयवर्गसमे पक्षे जातः स तथाऽकुलोद्भव इत्यर्थ । तथा येन तत् सजातीयविनय तुल्या गुणा निःशीलतादयो धर्मा यस्य स तथा । ततः कर्मधारयस्तेन कर्मधारयसमासकरणेन च गुरुशिष्ययो स्तुगुणास्यन्तसाम्यास्य व्यनक्ति, तादृशो हि तादृशमेव मुण्डयते "समानशीलव्यसनेषु सख्य"मिति वचनात् । 'स्वार्थाय' स्वप्रयोजनाय-स्वशरीरशुश्रूषादिहेतवे, नतु संसारदुःखेभ्यो मोचयितु, तमेव चिच ' पादर्चयन्ति ' मलयज-घु-मण-घनसारादिना वस्त्रादिना च सततं पूजयन्ति । ' अधिक ' मिति क्रियाविशेषणं-अतिरिक्तं ' इयेभ्यो ' जिनेभ्योऽपि ' जनाः ' श्रावकलोकाः । ननु ते तं पूजयन्तः तादृग्गुणा एव भविष्यन्तीत्यत आह-'विकचारगुणान्वया अपि' जगती प्रतीतगाम्भीर्यौदार्य-क्षमादिगुणमहाकुला अपि, आस्तां तदितर इत्यपि शब्दार्थः । कस्मादेवमित्यत आह-उग्रोगगच्छग्रहा इति हेतुगर्भं विशेषणं । लग्नः-चेतसि निविष्ट ' उग्रो ' दृढो ' गच्छग्रहो ' गच्छप्रतिबन्धो येषां ते तथा । भवतु निर्गुणो वा गुणी वाऽयं, किं नोऽनया चिन्तया ? गुरुभिरयमस्माकं प्रदर्शित , तथा अस्मद्वंश्यैरपि अय गुरुत्वेनाभ्युपगतः, न च वय तेभ्योऽपि परीक्षा दक्षा, अतः तत्परिपाटीमनुरुध्यमाना नैन त्यजाम इति विहितस्वगच्छगोचरमनोऽभिनिवेशा इत्यर्थः । अथ विदुराणामपि तेषां

साध्ये निर्यन्त्रे को हेतुरित्यत आह–'महतो' अतिप्रबलस्य 'मोहस्य' मिथ्याऽभिनिवेश स्यापि तथाविधाभ्यर्थनादिकं 'जृम्भितं' लीलायितं, तथाहि–न गुरूपदर्शितत्वं निर्गुणेऽपि तच्छिष्ये अभ्यर्थनादि निबन्धन, यदि हि गुरुः स्वाभ्यर्थनादिना निमित्तेन निर्गुणमपि स्वशिष्यं मोहाद् गुरुतया दर्शयति नैतावताऽसौ बहुमानमर्हति, विवेकिनां गुणानामेव बहुमान हेतुत्वात्, ते चेत् तत्र न सन्ति तदा किं निष्फलेन गुरूपदर्शितत्वेन ?, तथा स्वयमभ्युपगमस्यापि निर्गुणगुरु बहुमानहेतुत्वे उत्तमीभावावपि सुधी स्वकुलक्रमा गतदारिद्र्यादेरपरित्यागप्रसङ्गात् न चैवं लोक उपलभ्यते, यदुक्तं–" सुगुरुप्राप्तौ कुगुरुं, क्रमागतमपि जहति धीमन्तः । चिरपरिचितमपि नोज्झति, निखिलाभे को नु दौर्म त्यम् ॥ १ ॥" ततश्चैवं स्थिते यन्निर्गुणेऽपि गुरुत्वाभ्युपगमेनाभ्यर्थनादि सन्ति स महामोह महिमा एव इति वृत्तार्थः ॥ १३ ॥

एतर्हि गच्छमुद्रामुद्रिततया लोकानां सद्धर्मप्रतिपत्त्यादिना भूतावशामीक्षमाणाः सविषादमाह–

दुष्प्रापा गुरुकर्मसञ्चयवतां सद्धर्मबुद्धिर्नृणां ॥ १४ ॥

व्याख्या–'दुष्प्रापा' दुर्लभा 'सद्धर्मबुद्धि' र्भगवत्प्रणीत–निरुप–चरित–धर्मवि षया । पारमेश्वरस्य धर्मस्य सर्वस्यापि शोभनत्वाविशेषात् किं सदिति विशेषणेनेति चेत् ? न, तस्यापीदानीं कालदोषात् अनुस्रोतः–प्रतिस्रोतोरूपत्वेन द्वैविध्य दर्शनात्, तथाहि–सुख शीलजनैः सिद्धान्तनिरपेक्ष–स्वच्छन्दमतिप्रवर्तितो बहुजनप्रवृत्तिगोचरः पन्था अनुस्रोतः, श्रुतोक्तसकलयुक्त्युपपन्नः स्वयं भगवत्–प्रज्ञापितः प्रेक्षावत् प्रवृत्तिविषयस्तु प्रतिस्रोतः, ततोऽनुस्रोतोऽपव्यवच्छेदेन प्रतिस्रोतः सङ्ग्रहीतुं सदिति विशेषणं । केषां दुष्प्रापा ? 'नृणां' पुंसां 'गुरुकर्मसञ्चयवतां' महाज्ञानावरणादिसम्भारभाजां, सम्प्रति हि गुरुकर्मत्वाज्जीवानां न प्रायेण प्रतिस्रोतसि प्रवृत्तिरुपलभ्यते, यदुक्तं–" अयोग्यभावाद् गुरुकर्मयोगा–लोक प्रवाहस्पृहया दुरापा । प्रायो जनानामधुना प्रवृत्तिः, पथि प्रतिस्रोतसि जैनचन्द्रे ॥१॥" जातायामपि कथञ्चित् भव्यत्वपरिपाकात् प्रादुर्भूतायामपि सद्धर्मबुद्धौ 'दुर्लभो' दुरासदः 'शुभगुरु' र्यथार्थसिद्धान्तप्ररूपणनिपुणो लोकप्रवाहबहिर्भूतचेतोवृत्तिः कालाद्यपेक्षानुष्ठान परिष्ठः सूरिः । अयमर्थः–सद्धर्ममनोरथभावेऽपि सदुपदेष्टृगुरुं विना नासावासाद्यते, यदुक्तं–" धम्मायरियेण विणा, अलहंता सिद्धिमाइणो । ताव । जरपव तुंगसग्गा, भमंति संसारचक्कम्मि ॥ १ ॥" स च प्रायेण साम्प्रतमुत्सूत्रप्रभावकाचार्यप्राचुर्येण तथाविधो नाल्पमाराधलभ्यः, यदुक्तं–"यस्याजन्यविकल्पमल्पलहरीयुग्गुरुरूपः प्रकृपः, सर्ज अम्बेर

यन्ति संसदि मद विस्फूर्जता वादिनाम् । यमोत्सृष्टपद न जातु दिशति क्ष्माक्ष्मापाश्च स प्रायते, सत्वारिशपविज्रितः शुभगुरुः पुण्यैरगण्यैर्यदि ॥ १ ॥" प्राप्ताः–समासादिताः ' स ' तद्विद्गुणगुरुर्गुरुः ' पुण्येन ' भवान्तरसम्भृतसुकृतेन ' चेत् ' यदि, तथापि–शुभगुरुप्राप्तावपि ' कर्तुं ' विधातु ' स्वहित ' आत्मन आयतिसुखावह कर्म सद्धर्म प्रतिपत्तिलक्षणं ' नालं ' न समर्था ' अमी ' पुण्यप्राप्तशुभगुरवो मर्त्याः । अथा सादितसुगुरवोऽपि ते किमिति न स्वहिताय यतन्ते ? इत्यत आह–'गच्छस्य' स्वयत्ना भ्युपेत यतिवर्गस्य ' स्थितिः 'युष्मत्कुलादागतोऽय गच्छोऽस्य एनं विहाय युष्माभिः नान्य देशना–श्रवण–सम्यक्त्व–प्रतिपत्त्यादिक विधेयमिति गुहिणः प्रतीत्य लिङ्गिकृता व्यवस्था, तया ' व्याहताः ' एवंविधशुभगुरु प्राप्तावपि निःसत्त्वतया किमेनां गच्छस्थिति मुञ्चामो न वेतीति कर्तव्यतोद्भ्रान्तान्तःकरणा । एव गच्छस्थितिव्याहत तेषां स्वहित करणासामर्थ्यमुपलभ्य तदुपचिकीर्षुः चेतः समुद्गमरकरुणापारावारः प्रकरणकारः प्राह– ' क भ्रम ' इत्यादि, अतः कं पुरुषविशेष ' भ्रमो ' भजामः ?, क ' इह ' जगति ' आभ येमहि ' समभहि ? क ' आराध्यम ' दानादिनोपचरामः ?, एतेषां भजनादीनां मध्यात्किं ' कुर्महे ' विदध्महे ?, यदि कस्यचिन्महात्मनो भजनेन आराधनेन वा गच्छस्थितिं विमुच्य सद्धर्मप्रतिपत्त्या एते स्वहितमाचरन्ति तदेतदपि क्रियते, परोपकृति धी–धिस्वास्तु पुरुषाणामिति । अथवा यदाहि प्राप्तशुभगुरवोऽपि तत्त्वं जानाना अप्येव गच्छस्थित्या व्याहन्यन्ति तदा क भ्रम इत्यादि, अयमर्थः–अज्ञानानो हि तत्त्व स्वय वा कस्यचिद्भज नाराधनादिना वा तद्बोधयित्वा सद्धर्मे स्थाप्येतापि, एते च मूढा जानन्तोऽपि गच्छ स्थितिव्याहता, इति कथ तत्र स्थापयितु पार्यते ?, तत् सर्वथाऽस्मत्वेतस्यमीषां सन्मार्गव्यवस्थापने न कश्चिदुपायः प्रतिस्फुरति, अतः ' किं कुर्महे ' इति विषादवचनं । इदमत्रैदम्पर्यं–महासत्त्वसत्त्वोपादेयो ह्यय सद्धर्मः, एते चातिक्लीबाः अन्यथा किं विदुषां गच्छस्थितिभिया ?, यद्यपि हि लिङ्गिनः स्वलाभादिहेतुना गच्छस्थितिं दर्शयन्ति, तथापि गृहिणा परीक्षापूर्वं समः प्रतिपत्तव्य इति वृत्तार्थः ॥ १४ ॥

इदानीं कस्यचिद्योग्यस्य–पार्श्वपदप्रायस्य तदसम्भावितप्रदर्शनेन वृत्तावज्ञामाह–

क्षुत्क्षाम किल कोऽपि रङ्कशिशुकः प्रव्रज्य चैत्ये क्वचित् ॥ १५ ॥

व्याख्या—'क्षुत्क्षामः' बुभुक्षया क्षीणकुक्षिः गृहस्थावस्थायां, किलेति सम्भावन, कोऽपि–अज्ञातनामा 'रङ्को' भिक्षाकोऽत्र एव कुत्सितोऽनुकम्पितो वा 'शिशुको' बालः, "कुत्सायामनुकम्पने वा कः" । ततो रङ्कश्चासौ शिशुकश्चेति कर्मधारय । रङ्कस्य वा

कस्यचित् शिशुक इति, प्रव्रज्य–मुण्डीभूय 'चत्ये' लिङ्गिसम्बन्धिजिनगृहे, कचि-दनिर्दिष्टनाम्नि 'कृत्वा' विधाय लज्जादिना कञ्चन कमपि पत्रमूल वलीवर्दं यति भावकं वा पर्श सहाय, न सारकसाहाय्य विना सारज्ञाम्–आचार्यपदलाभसम्भवः । 'अवाप्तकमिव' यस्किञ्चिन्निमित्तमात्रं प्राप्य शिक्षादिभिः सह निरुपमसम्पादितकलहः 'प्राप्त' आसादित [ स्सन् ]वान् सन् (!) तदिति विवकिनां विडम्बनास्पद 'आचार्यकं' आचार्यत्व–सूरि-पदमित्यर्थः । 'चित्रं' अद्भुतमेतत् 'चैत्यगृहे' देवभवने 'गृहीयति' गृहस्थाचरति, यथा निजगृहे गृही शयना–सन–पान–सम्भोग–ताम्बूलभक्षणादिक निश्शङ्क समाचरति, तथाऽयमपि । तथा 'निजे' स्वकीये गच्छे 'कुटुम्बीयति' कुटुम्बवदाचरति, यथाहि गृहस्थः कुटुम्बे पर्वदिनेषु दानानुप्रदानादिषु प्रवर्तते, एव एषोऽपि साधुमाध्व्यादि वर्गे तथा प्रवर्तमान एवमुच्यते । यदि वा आचार्येण हि स्मारणवारणादिपूर्वक प्रत्युपेक्षणप्रमार्जन शिष्याध्ययनाध्यापनादिनोपरोपरगुणस्थानाधिरोपणेन स्वगच्छो नित्यमेवेक्षणीयः यथा दोष च शिक्षणीय इति सिद्धान्तस्थितिः । यथा गृही द्रव्यार्जनगृहकर्मादिकरणदक्षं पुत्रादिक बहुमन्यते तदन्य चावमन्यते तथा गच्छमध्यादिभामकादि शुश्रूषाकारिणं सदोषमपि भूषयते तदन्य च सद्गुणमपि दूषयति, इति गृहिकुटुम्बमाक्रियाचर्यत्वात् तथा व्यपदिश्यत इति । तथा 'स्वं' आत्मान 'शक्रीयति' शक्रमिव–पुरन्दरमिवाचरति, सहि नीचत्वात् तथाविधचैत्यद्रव्य–शिष्यश्रावकादि–समृद्धिदर्शनात् तु भविष्णुः शक्रोऽहमिति मिमन्यत इति । तथा कतिपयशास्त्रसिद्धान्तज्ञ तथा 'वाक्त्रिशीयति' वाचस्पतिमिव–सूर्वा निवाचरति 'दुधान्' विचक्षणान्, अहमेव सकलशास्त्रपारगामी किमन्ये अत्र विदन्तीति । तथा अतएव चित्रं 'वराकीयति' वराकमिव–रङ्कमिवाचरति । अयमा शयः–ईश्वरो हि कश्चित्प्रव्रज्य प्राप्ताचार्यपदः सन् निर्विवेकतया कदाचित् चैत्यगृहादिषु गृहीयतीत्यादिक विडम्बोऽपि न तथा लोकानां चित्रीयते, गृहवासेऽपि लोकेस्तथा दर्शनात्, अय तु रङ्कशिशुर्दीक्षित्वा परिपक्वासादनेन तथा कुर्वन्ति जनानामुपहास विषयतया महदाश्चर्यभाजनं, तदहो ! ! अत्यन्तमाचार्यादिमनुचितचैत्यगृहे गृही–चरय विमा असच्चेष्टितेन भुवपापाना पापानां मलिनयति प्रवचनमिति वृत्तार्थः ॥ १५ ॥

सम्प्रति पुत्रपित्रादिसम्बन्ध विनाऽपि हठाल्लिङ्गितलोकवाहनोपालम्भद्वारेण श्रुतावज्ञां प्रतिपादयन्नाह—

पैर्जातो न च वर्धितो न च न च क्रीतोऽधमर्णो न च ॥१६॥

व्याख्या—यैः लिङ्गिभिरय जनो न च जातो, जनरान्तरभाविनेनर्थत्वात्–न जनितः–पित्रादिरूपतया न जन्म लम्भितः । चकाराः सर्वेऽपि समुच्चयार्था अवधारणार्था

वा । अथ मा भूत् आतस्तथापि वर्द्धितो भविष्यति, एतावताऽपि बलात् तद्वाहनसिद्धिः अत आह–वर्द्धितो न चेति, एवमुत्तरपदद्वयेऽप्याशङ्क्य योजना कार्या, वर्द्धितो–योगक्षेमादि सम्पादनेन शरीर–पोषं प्रापितः । न च 'क्रीतो' मूल्यदानेना यस्मात् गृहीतः । अधमर्णो न च, उत्तमर्णप्रकाशात् तद्वारादि प्रयोगणार्थगृहीताऽधमर्णः । अत्र च यैरिति कर्तृतया सम्बन्धानुपपत्तेर्येषामिति सम्बन्धविवक्षया षष्ठ्यन्तो योज्य, अर्थवशाद्विभक्तिपरिणाम इति न्यायात् । तेन यथा लिङ्गिनामयं जनोऽधमर्णोऽर्थधारयिता न भवति, एवमुत्तरत्रापि यथासम्भवं येषामिति सम्बन्धनीयं । तथा येः 'प्राक्' पूर्वं दृष्टो ऽवलोकितो न च, अधमर्णः–ये लिङ्गिभिः स्वधाम्ना दूरदेशवर्तित्वात् कदाचिदपि न दृष्टास्तेऽपि स्वगच्छग्रह ग्रस्तत्वादन्य गुरु वार्ताऽपि न सम्भाषन्त, तमेव गच्छगुरु ध्यायन्तः कालमति वाहयन्ति । 'बान्धवः' पितृव्य–भ्रातृव्यादिसम्बन्धभाग् न च यथा न च 'प्रेयान्' अतिशयेन प्रियतरो मैत्र्यादिसम्बन्धेन, न च 'प्रीणितो' दानसन्मानादिप्रपादिना तोषितः, तैरेव प्रागुक्तसम्बन्धाभावेन लोकवाहनयोग्यतावैकल्येलिङ्गिभिरेव । " एव इत्यव्ययमिह परिमवे ईषदर्थे वा " । ततश्च महापराभवोऽय–यत् तादृशैरपि लिङ्गिभिर्लोको वाह्यते इति 'बलात्' हठेन, न तु प्रणयेन 'वाह्यते' वशीकृत्य स्वकार्याणि कार्यते 'अय' गच्छमहाग्रहगृहीतः प्रत्यक्षोपलभ्यमानो 'जनः' भावुकलोको 'नस्योतो' नासिकायां प्रोत इव 'पशुवत्' वृषभादि इव लिङ्गिभिरुक्तसम्बन्धं विनाऽपि यदयं लोको वाह्यते तन्महा परिभव इति, ननूक्तसम्बन्धं विनाऽपि सद्गुरुत्वेन तेषां नस्तितपशुवल्लोकाः कार्याणि निर्मापयिष्यन्ति, न सद्गुरूपकृत–परहितरतानां गुरूणां धर्मदानोपकारस्य प्रत्युपकारः कर्तुं शक्यते, अत आह–मत्स्यधर्मा(धमै)रिति, लोकलोकोत्तरगर्हितदम–साध्वीप्रतिसेवा देवद्रव्यभक्षण–सुविहितयति–शासनोड्डाहप्रभृति–भूरिपापकर्मनिर्माणात् अतिशयेनाध मेभ्योऽपि–हीनजातीयेभ्योऽप्यधमैर्हीनैः, अतः कथमेषां सद्गुरुतया लोको वाहनीयो भविष्यति, अथैवंविधैरेभिः कथं तर्हि वाहयितुं लोकः पार्यते ? अत आह–' कृतमुनि व्याजैः ' प्रपञ्चचतुरतया विश्वासोत्पादनेन मुग्धजनस्य विप्रलिप्सया रचितशान्तरूप मासोपवासकरणादि छद्मभिः । अयमर्थः–एवमप्रमञ्जसकारिणोऽपि लिङ्गिनो विभ्रम्भ हेतु तथाविधयतिरूपप्रदर्शनेन सुकरपथप्ररूपणेन च सुलब्धान् मुग्धान् प्रलोभ्य यथेच्छ वाहयन्तीति । अमुमर्थं समर्थयितु प्रकारान्तरेण लोकवाहनप्रतीकारमसम्भावयन् सविषाद वैधर्म्येणार्थान्तरन्यासमाह–'नीराजक' विगतमहाशैवर्य–न्यायपरक्षित–प्रजाद्रुष्ट शिक्षाशिष्टरक्षा–विचक्षणनृप । किं राजसहितमपि नीराजकमिव नीराजकमुत्पद्यते ? दा इति विषादे, जग–द् भुवन, न ह्यन्ययोदिता गुणमाशि–राजनि बलाल्लोकवाहनं कर्तुं लभ्यते ।

अयमाशयः—यथा सगुणं रामानं विना तदेशः प्रतिरूप-मलिम्लुचादिभिः उपद्रूयते एव सम्प्रति प्रौढतातिशय-भद्रवचनापेक्षणीय-गणधरादि पुरुषसिंहविरहात्कुलिङ्गिभिरयं भारतभो बाधत इति वृत्तार्थः ॥ १६ ॥

अधुना लिङ्गिनां वैपर्स्य दृष्ट्वाऽपि कदाग्रहात् तत्प्रथित-मार्गात् अनिवर्तमाना न्मूढान् दिङ्मूढत्वादिना विकल्पयन्नाह—

*किं दिङ्मोहमिताः किमन्धबधिराः किं योगचूर्णीकृताः ॥ १७ ॥*

व्याख्या—किं शब्दाः सर्वेऽपि विकल्पार्थाः, किममी जडा दिङ्मोहः—कुतश्चिद् दृष्टादि निमित्तात् प्राच्यादि दिक्षु प्रतीच्यादिभ्रमास्तं मिताः प्राप्ताः। अयमर्थः—यथा दिङ्मूढाः प्राचीं प्रतीचीत्वेनाध्यवस्यन्तो लोकेन युक्त्या ज्ञापितवथा अपि तदध्यवसायात् न निवर्तन्ते, एवमेतेऽपि विदितकुपथदोषा अपि कुतोऽपि हेतोरनिवर्तमानाः तत्साम्यात योऽयन्ते। किमन्धा—नयनहीना 'बधिरा' उपहतश्रवणाः, अन्धाश्च बधिराश्चेति द्वन्द्वः, ते किम चा? किं बधिरा इत्यर्थः। यथा अन्धा दृग्विकलत्वात्सत्पथस्य ज्ञानम् अजानाना अपथमपि सत्पथतयाऽवगम्य तत्र गच्छन्तो हितैषिणा तत्र त्राप्यमाना अपि स्वग्रहात् न निवर्तन्ते, यथा बधिराः श्रुतिविकलत्वादमाकर्णयन्तो दृष्टचैवाक्षिकादि वचो निन्दार्थः स्तुत्यर्थतयाऽवगम्य तदानादौ प्रवर्तमानास्तत्र बोधिता अपि स्वनिर्बन्धात् न निवर्तन्ते, एवमेतेऽपि सदोषमपि कुपथं स्वगच्छादिग्रहात् निर्दोषितयाऽवबुध्य ततोऽनिवर्तमानास्त योऽयन्ते। एवमुत्तरदेष्वपि भावनीयम्। तथा किं वशीकरणाविहेतुरनेकद्रव्यमेलका पादप्रलेपादियोगः, तादृशेन नयनाञ्जनादिचूर्णं, योगश्च चूर्णं च, स विद्यते येषामिति विग्रहे तदस्यास्तीतीन्। अयोगचूर्णिनः योगचूर्णीकृता, अभूततद्भावे च्विः। मस्तकादिषु योगचूर्णक्षेपेण वशीकृता इत्यर्थः। यथा केनापि धूर्तेन विषयोगचूर्णाः पुमांस आत्मनोऽहितैषिणमपि तं हितैषितया मन्यमाना केनापि तत्त्व प्रत्याय्यमाना अपि योगादि प्रभावेण तद्वचनकरणात् न निवर्तन्ते, तथैतेऽपि कुपथादिति पूर्ववत्। किं 'दैवेन' प्रतिकूलविधिनोपहताः—सद्बुद्धिभ्रंशं प्रापिताः, तेहि विधिवशेन विपर्यस्तमतित्वात्—अकृत्यमपि स्तेयादिकं कृत्यतया मन्वानास्तत्त्वं प्रतिपाद्यमाना अपि दुर्दैवमहिम्ना ततो न निवर्तन्ते, तथैतेऽपि। किं अङ्गेति—पार्श्ववर्त्यामन्त्रणं, ठकिता—मन्त्रादिप्रयोगेण, स्वाय चीकृता, यथाहि केचन केनापि दुरमान्त्रिकेण वशीकरणमन्त्रेण तथाकृताः तद्वचनमत्यन्तं समीचीनतयाऽभ्युपगच्छन्तः तत्पथमवगमिता अपि मन्त्रमहिम्ना न ततो निवर्तन्ते, एवमेतेऽपि। किमेवेति पक्षान्तरे। 'ग्रहै' भूतादिभिः 'अधिष्ठिताः' कृतावेशा—विहितशरीरा

धिष्ठाना इति यावत्, यथा भूताद्यधिष्ठिताः तदावेशात् विवेकापरिज्ञानेनाविधेयमपि पिट्ट महारादिकं विदधानास्ततो निवर्त्यमाना अपि न निवर्त्तन्ते, एवमेतेऽपि सदसद्विवेक विकलतया कुपथात् न निवर्त्तन्त इति। अत्र च दिक्‌मूढादि बहुविकल्पप्रदर्शनमाधुनिकमाद्य लोकानामसत्यत्वानिवृत्त्यै स्वगच्छप्रद्वप्रस्तुतस्थापनार्थं। 'कृत्वा' विधाय 'मूर्ध्नि' पादं 'श्रुतस्य' सिद्धान्तस्य, सिद्धान्तोक्तातिक्रमेण निश्शङ्कतया स्वगुरुलिङ्गिप्रदर्शिता सन्मार्गारोपणमेव श्रुतमूर्ध्निपादकरणं, यतः "नवि किंची" त्यादागमसकलस्य इदमु-त्तरार्द्ध-"एसा तेसिं आणा, कज्जे सच्चेण होयव्वं" इति। अस्य चायमर्थः-एषा भग वतामाज्ञा, यत्कार्ये सत्येन भवितव्यं, कोऽर्थः ? कार्यं-ज्ञानादित्रयं, सत्यं च संयमः, यथा यथा ज्ञानादिकं संयमश्चोत्सर्पेत्तथातथा यतिना निर्माय यतितव्यं, यदाह-" कज्जं नाणाईयं, सच्चं पुण संजमो मुणेयव्वो। जह जह सो होइ थिरो, तह तह कायव्वयं कुणसु ॥ १ ॥ दोसा जेण निरुब्भंति, जेण खिज्जंति पुव्वकम्माइं। सो सो मुक्खोवाओ, रोगाव त्थासु समणं व ॥ २ ॥" न चागमे सुखलिप्सया किञ्चिदनुज्ञातं, किं तर्हि ? भावता विना संयमज्ञानादि यात्रा नोत्सर्पति तावन्मात्रस्यैव विहितनिवारणस्य निवारित विधानस्य च भगवद्भिः पुष्टालम्बनेन कादाचित्कतया तत्रानुज्ञानात्। एवं च कथं श्रुत स्याप्रामाण्यमस्या ? भवदसन्मार्गस्य चौद्देशिकभोजनादेः सर्वस्यापि सार्वदिकतया निर्वि घ्नत्वेन केवलसुखानुभवोद्देशेनैव प्रवृत्तं। तथा च तस्य महासावद्यत्वेन ज्ञानादियात्रा हात्रापमानत्वात् कथं प्रामाण्यमित्याह-अकलितगुणदोषविभागः, स्वपक्षानुरागो यस्या भासानां पक्षभगवन्मतस्याप्रामाण्यस्याऽऽपादनेन स्वमतस्योत्कर्षप्रदर्शनं। किञ्च-तीर्थंकर पूर्वधरादिसातिशयमहापुरुषविरहे सम्प्रति सिद्धान्त एव नः प्रमाणं। यदुक्त-" एवं पि अम्ह सरणं, ताणं चक्खू मई पईवो य। भयवं सिद्धं तो चिय अविरुद्धो इह इह्वादि ठेहिं ॥ १ ॥" तस्य च प्रामाण्यानभ्युपगमे तत्प्रणेतुर्भगवतोऽप्यप्रामाण्याभ्युपगम प्रसङ्गेन भवतस्तन्मूलरजोहरणादिवेषपरित्यागापत्तिः, तथा चाय मुखाश्रया भव त्कल्पितः पन्थाः सर्वोऽपि विरुध्यते, एवं च लिङ्गिनां श्रुतस्य मूर्ध्नि पादकरणमनु चितमपि ज्ञात्वा यदमी प्रत्यक्षगोचराः श्रावक जनाः सुखकगच्छप्रद्वग्रन्थयो 'स्थोरु दोषा अपि' प्राक्तारकतरगुरुतरपूर्वोदितकुपथापराधा अपि, अदृष्टदोषा हि विवेकिनोऽपि कुपथादपि न निवर्तितुमीशते, किं पुनरन्य इत्यपि शब्दार्थः। 'व्याहृति' अपसरण 'कुपथात्' कुमार्गात् 'जडाः' स्वाहिताहितविवेकशून्याः 'न दधते' न चेतसि धार यन्ति न कुर्वन्तीत्यर्थः। न केवलं व्याहृतिं स्वयं न दधते 'असूयन्ति च' ईर्ष्यन्ति, सद्गुणेऽपि दोषमारोपयन्तीति यावत्। चः समुच्चये। एतां कुपथव्याहृतिं करोति, एतत्

कत् तस्मै, "क्रुध-द्रुहेर्ष्यासूयार्थानां" चतुर्थी, महाशयाय कस्मैचित् कुपथव्याधुपविधायिने। अत्र चोत्तरवाक्यार्थगतत्वेन प्रयुज्यमानो यच्छब्दस्तच्छब्दोपादानं विनाऽपि तदर्थं गमयति, तेनायमर्थः—येषां हि दशोपस्थात् कुपथात् तावत्स्वयं व्यावृत्तिः कर्तुं युक्ता, अथ कुतोऽपि हेतोः स्वयं न व्यावर्तन्ते तदा तद्व्यावृत्तिकारिणि प्रमोदो विधातुं सङ्गतः, यत् पुनरमी तद्व्यावृत्तेकमपि कर्तुं नोत्सहन्ते, प्रत्युत कुपथनिवृत्तिविधायिनि कस्मिंश्चित् एकस्मिन्नपि द्रुह्योपद्रवाय यतन्ते, तत्किममी दिग्मोहमिता इत्यादि योज्यम्, तेन एतदुक्तं भवति—दिग्मूढादयो हि हितैषिणा व्यावृत्यमाना अपि दिग्मोहत्याद्रेकर्तावृत्ति मात्रमेव न कुर्वन्ति, एते तु न केवलं कुपथात् न व्यावर्त्यन्ते यावता कुपथव्यावृत्तिकारिणे द्रुह्यन्त्यपीति तेभ्योऽप्यमी कुत्सिता इति वृत्तार्थः ॥ १७ ॥

साम्प्रतं लिङ्गिदेशनया भावैरविधिकृतस्य जिनमज्जनस्यापि दुर्गतिपातहेतुत्वं प्रतिपादनद्वारेण श्रुतपथावज्ञां दर्शयन्नाह—

दृष्टायातितुष्टविटनटभट्टचेटकपेटकाकुलं ॥ १८ ॥

व्याख्या—'जैनमज्जनं' भगवद्बिम्बस्नात्रं कर्तुं 'जनयत्येव' सम्पादयत्येव, नतु कदाचित् न जनयत्यपीत्येवकारार्थः। 'अघपङ्के' पापकर्दमे 'निमज्जनं' ब्रुडनं कर्म, तत्कर्तृणामिति शेषः। अथ कथं पुण्याय विधीयमानं जिनस्नात्रं पापपङ्कनिमज्जनाय प्रभवति इति आह—'अविधिना' सिद्धान्तोक्तक्रमविपर्ययेण, प्राक्तनविशेषणान्यथाऽनुप पत्त्या रात्राविस्यर्थः, सिद्धान्ते हि रजन्यां जिनस्नात्रं निवारितमवस्तत्र तत्कर्तॄणां कथं न पातकमित्यर्थः। अथ क दोषमभिप्रेत्य सिद्धान्ते रात्रिस्नात्रनिवारणमिति दोषप्रदर्शनाय हेतुगर्भं विशेषणत्रयं मज्जनस्याह—दृष्टायाति इत्यादि, दृष्टाया—चञ्चलाया मज्जनदर्शनमिषे णागताया 'अयाति' मेलकस्तया तुष्टा—निःशङ्कमत्राय नः सुरतलीला प्रवर्त्स्यतीति धिया मुदिता 'विटा' वेश्यापतयः 'नटा' नाटकाभिनयकलोपजीविनः 'भट्टा' मल्लादिकलाजीविनः 'चेटका' मासादि—नियमितवृत्तिग्राहिणः, एषां 'पेटक' समुदायस्तेना—'कुल' मुमिश्र, प्रेयसी प्रायेण सात्विककमायना कुलीकृतविटादिभिराकीर्णत्वात् मज्जनमप्युपचारादाकुलं, तथा 'निधुवनविधिनिबद्धदोहदा' मोहनविलसितविहिताभिलाषाः या 'नरनार्यः' पुरुष योषितः तासां 'निकरेण' निचयेन 'सङ्कुलं' व्याप्तं। नारीणां प्रायो निधुवनार्थमेव मज्जनाव लोकनछलेन तत्र गमनात्, तथाविधव्याजमन्तरेण रात्रौ तत्राभ्यागमनासम्भवात्, तथा विधव्याजेन चान्यत्र गन्तुमशक्यत्वात्। अत एव 'रागः' कश्चित् परस्त्री प्रत्यभिष्वङ्गः 'द्वेषः' स्वस्त्रीमन्येन सह सङ्गच्छमानां पश्यतः तज्जिघांसा 'मत्सरः' कश्चित्सौभाग्येन कयाचित्

सङ्घटमानमालोकयतः स्वयं च तां कामयमानस्य तत् सौभाग्यमपेक्ष्य 'ईर्ष्या' स्वप्रेमामन्येन सार्धं सल्पन्तीमीक्षमाणस्य असहिष्णुता, ततो रागद्वेषादि द्वन्द्वः, तामिः 'घनं' सान्द्रं, अत्रापि-रागादिमल्लोकपदस्यात् मज्जनमप्युपचारात् तथा, कामुकलोकमेलके हि जिनगृहेऽपि निशायां रागादय एवोज्जृम्भते, न त्वल्पापि धर्मभावना, तस्मात् दिन एव स्नात्रं धर्मार्थिनां श्रेयो, न रात्राविति। अत्र केचित् उच्यते-रात्रिस्नात्रे न कश्चिद्दोषः, जिनजन्म समयस्य शक्रेण तथाभिधानात्, तथाहि-सर्वेऽपि जिनेन्द्रा रात्रियामद्वयसमय एव जायन्ते, तदैव सुरेन्द्रा मेरुगिरिशिखरे नीत्वा तान् स्नपयन्तीति श्रूयते, तस्य च तथा स दोषत्वे शक्रः तथा न कुर्वीत, तस्मादिन्द्रा चरितप्रामाण्यात् निशायामपि स्नपन विधातव्यमिति चेत् न शक्रो जिनमज्जनं मेरौ करोतीति मन्यामहे, न तु यामिनीयामद्वितीय इति, मेरुशिखरे सूर्योदयास्तमयाभावेन रात्रिदिनव्यवहाराभावात्। कथं तर्हि प्रकाशाभावे तत्रेन्द्राणां जिनमज्जनादिविधिरिति चेन्न, रत्नभूमस्य निरस्ततमःस्तोमभूयद्योतेन विमलमाणिक्यशिलामरीचिनिचयेन देवमहिम्ना च निरन्तरं भासुरत्वात्। एवं च इन्द्राचरितादृष्टान्तेन कथं रात्रिस्नात्रं समर्थ्यमानं सङ्गच्छते ?, श्राद्धानां त्रिसन्ध्यं जिनपूजाया दिनकृत्यत्वेन सिद्धान्तेऽभिधानात्। ततश्च " विधि-किरिया विरुद्धा " इत्यादेरयमर्थो-यः प्रमादादि-सन्ध्यायां वृत्तिनिमित्तवाणिज्यादिव्यग्रत्वात् कथञ्चित् देवपूजायां न व्याप्रियते स दिनमध्ये एव मुहूर्तादिना सन्ध्यातिक्रमेऽप्यपवादतः पूजां करोतु, न पुनरन्याय्यमर्थों, यदुतापवादेन रात्रौ करोति, दिनकृत्यता हानिप्रसङ्गात् प्रभूतायतनाकरणादि दोषप्राप्तेश्चेति। एतेन रात्रौ जिनसदने बलि दान-नन्दि-प्रतिष्ठादि-विधानमपि निरस्तं, प्रायो मज्जनेन समानयोगक्षेमत्वात्, निशिस्नात्रोक्तदोषाणां बलिदानादावपि सम्भवात्। तथाहि-दीक्षार्थं नन्दिकरणं, दीक्षा च स्थूलसूक्ष्मप्राणातिपातविरतिलक्षणा, रात्रौ च प्रकाशनिमित्तज्वलितभूरिदीपकपतङ्गादिकीटानां स्वयं शरीरस्पर्शनेन व्यापादनात्, प्रदीपेषु च सतत निपततां पतङ्गादि जन्तूनां व्यापत्तिभावात्। कीदृशी तावद्गृहीता सर्वविरतिः ?। शिष्यस्य दीक्षाप्रथमक्षणादारभ्य प्राणातिपातप्रवृत्तः, दीक्षादातुश्च दोषसद्भावेऽपि वक्तुं न शक्यते, तच्छिक्षया तावत् तुभ्यात्याघातप्रवृत्तः। अहहो !! मूढा ! एतावन्तं पापकलापमात्मन्यारोपयन्तो भाविभवभ्रमणात् मनागपि न बिभ्यन्तीति। किञ्च दिवसे दीक्षादिलग्नवेलाभावे रात्रौ च तत्प्राप्ते विहारक्रमवदपवादेन कदाचिद्रात्रावपि नन्दि विदधतां को दोषः ? इति चेन्न, विहारक्रमस्यापवादेन रात्रावपि प्रतिपादनात् तत्र कदाचित् तस्करात् युक्त, नन्दिविधानस्य चापवादेनाप्यागमे रात्रावनभिधानात् कथं तद्विधाने तत्र सङ्गच्छेत् ?। किञ्चापवादिक कृत्यानां रात्रिविहारकमादीनां सर्वेषां प्रायश्चित्त

ममिहितमागमे, न च निशि नन्दिविधानस्य तत्रोऽवगम्यते–नास्त्यपवादेनापि रथ्यां नन्दिविधान, एव निशि जिनप्रतिमा प्रतिष्ठायामपि सकलमेतद् दूषणजात विचिन्त्य वाच्यं, तदुक्त–" प्रादुष्यदोषपोषायां, दोषायां साधयन्ति ये । जिनबिम्बप्रतिष्ठां ते, प्रतिष्ठां स्वस्य दुर्गतौ ॥ १ ॥ " तदेव दोषकलापदर्शनाद्रात्रौ मज्जनादि विधायिनां पापपङ्के निमज्जनं भवतीति व्यवस्थितं । इद वक्ष्यमाण च वृत्तद्वय त्रिपदीच्छन्द इति वृत्तार्थः ॥ १८ ॥

साम्प्रत प्रसङ्गेन मज्जनात् अन्यस्यापि धर्मकृत्यस्य संसारनिमित्तत्वं प्रकटयन्नाह–

जिनमतविमुखविहितमहिताय न मज्जनमेव केवलं ॥ १९ ॥

व्याख्या—' जिनमतविमुखविहितं ' भगवदागमवैपरीत्य–निर्मित ' मज्जनमेव ' स्नपनमेव ' केवल 'एक ' अहिताय ' संसाराय न भवति–स्नानमेवैकं अविधिविहितं संसारकारणमिति नास्ति, किन्तु किं तर्हि ? तप्यते यावतोऽशुभकर्माणि यानेनेति तपो ऽनशनादि, तथा ' चरित्रं ' सर्वविरतिः ' दान ' पात्रेषु न्यायार्जितशुद्धभक्तादिवितरणं, आदिशब्दात् जिनचैत्यावृत्त्यादिग्रहः, ततस्तपश्चेत्यादि द्वन्द्वगर्भो बहुव्रीहिः । तदेवमा द्यप्यनुष्ठान जिनमतवैपरीत्य विहितं, न केवल मज्जनमित्यपि शब्दार्थः । ' न खलु ' नैव 'जनयति' सम्पादयति 'शिवफलं' मुक्तिरूपं फलं । अथ कस्मादेव ? इत्यत आह–'हि' यस्मात् 'अविधिविधिक्रमात्' सिद्धान्तानुक्त–तदुक्तप्रकारेण ' जिनाज्ञाऽपि ' भगवच्छास नोक्तानुष्ठानमपि ' अशुभशुभाय ' अश्रेयः श्रेयसे, द्वन्द्वैकवद्भावादेकवचन । ' जायते ' सम्पद्यते, यथासंख्येयनात्र योजना, तथायमर्थः–किल जिनपूजा–तपःप्रभृतिप्रवचनप्रसिद्धं जिनाज्ञा, भगवता निःश्रेयससाधनत्वेनाज्ञापितत्वात् । तथा च तदप्यविधिक्रमेण–"काले सुइभूएण" इत्याद्युक्तविधिविपर्ययेण क्रियमाणमशुभाय भवति, विधिक्रमेण तु सा ज्ञात्वा या–शासनशुचिभूतत्वाद्विना सदैव शुभाय । विध्यविधिभ्यां भगवदाज्ञाऽऽराधना–नाराधन योरेव मोक्षसंसारफलत्वात् । किं पुनरित्यादि वाक्य काका योज्यं । अत्र च किमित्या क्षेपे, पुनरिति वाक्यभेदे, इति प्रकरणे । सनैषा प्रकृतारात्रिमज्जनादिका क्रिया ' विडम्ब नैव ' प्रवचनापभ्राजनेय–लोकोपहासास्पद, न त्वेषा जिनाज्ञाऽपीत्येवकारार्थः । ' अहित हृतुः ' संसारनिबन्धनं ' न प्रथयत ' न विस्तारयति, किन्तु अवहितहेतुत्वेन प्रख्याप्यते एव, इदमुक्तं भवति–जिनाज्ञाऽपि तपःप्रभृतिका आवश्यकादिका–धाकर्मभोजनादिका वा यदा अविधिना विधीयमाना भवफला तदा किं पुनरदया विडम्बनायाः–सर्वथा जिन वचनबाधाया रात्रिमज्जनादिकाया वक्तव्य ? सुतरामेषा भवहेतुरत्न, अतोऽहितहेतुत्वेन

प्रज्ञाप्यते येन सा तथा प्रज्ञाप्यमाना कस्यापि पुण्यात्मनः स्वतो निवर्त्तनाय प्रभवतीति सूत्रार्थः ॥ १९ ॥

इदानीं निर्वाणकारणमपि निसर्गेण जिनगृहादि निर्मापण गृहिणः क्रमवादि निर्देशस्याप्यनुबन्धात् भवहेतवे भवतीत्येतत् प्रदर्शनायाह—

जिनगृह–जिनबिम्ब–जिनपूजन जिनयात्रा–दि विधिकृतं ॥ २० ॥

व्याख्या—'जिनगृहं' जिनभवनं 'जैनबिम्बं' भागवती प्रतिमा 'जिनपूजनं' भगवत्प्रतिमायाः कुसुमादिभिः अभ्यर्चनं 'जिनयात्रा' जिनान् प्रतीत्य–अष्टाह्निका कल्याणक–रथनिष्क्रमणादि महामहकरणं, ततो जिनगृहं चेत्यादिद्वन्द्वगर्भो बहुव्रीहिः, एवमुत्तरपदयोरपि । आदिग्रहणात् जिनवन्दनप्रतिष्ठादिग्रहः । इह चासकृज्जिनपदोपादानं भगवतोऽत्यन्तभक्तिगोचरतया तदुद्देशेन विधिना जिनगृहनिर्माणस्य परमपुण्यफलत्व स्थापनार्थं, एवमादि धर्मकृत्यजातमिति शेषः । 'विधिना' श्रुतोक्तेन प्रकारेण 'कृतं' निर्मापितं । तथाहि–जिनगृहनिर्मापणविधिः शुद्धभूमिपरिग्रहादिकः, जिनबिम्बे विधिना निर्मापिते प्रतिष्ठापिते चाय पूजनविधिः–सन्ध्या त्रये विधिना शुचिभूत्वा भगवत् बिम्बं महाभाग् पुष्पादिभिरर्चयति, तथा तत्र च कल्याणकादिदिनेषु यात्रा प्रस्तूयते, तत्र चाय विधिः–यथाशक्ति दान–तपश्चरण–शरीरविभूषा–जिनगुणगान–वादित्रादिकरणं । तथा 'दानं' अभयदानादि 'तपो' ऽनशनादि 'व्रतानि' स्थूलप्राणातिपातविरमणादीनि । आदिशब्दात्–विचित्राभिग्रहः । तथा भव चेत्यादि द्वन्द्वः । तथा 'गुरोः' धर्माचार्यस्य 'भक्तिः' शुश्रूषा आगच्छदभिमुखगमनासनदानाभ्युत्थान–गच्छदनुगमन–विश्रामणा–विशुद्धभक्तपानादि दानविधानानुरञ्जनादिका । 'श्रुतपठनं' सिद्धान्ताध्ययनं । आदिग्रहणात् तदर्थश्रवणमननादिग्रहः । एतच्च विवेकिना विज्ञेयेन विधेयं, एतत्पुरस्सरस्यास्य फलप्रागुक्त जिनगृहादिकरणविधिप्रतिपत्तेः । यदाह—"अविहिसि परिविचीए, नियधणं होइ विहिसमारंभो । सो सुयाउ नज्जइ, सो य परम पडुपई ॥ १ ॥ सुया अत्थे ममो, अहियपरो नवरि होइ कायव्वो । इत्तो उभयविसुद्धि, सुयणं फलदं सुयमिति ॥ २ ॥" एतदन्तरेण समस्तस्यापि क्रियाकलापस्यान्धमूक साम्यापत्तेः । ततो गुरुभक्तिश्चेत्यादि द्वन्द्वः, चः समुच्चये । भावत सद्गुमानं, न स्वपदलया । एतत्सकलं जिनगृहादि–दानादि–गुरुभक्त्याद्यनुष्ठानं, किमित्याह– 'स्यात्' भवेत् इह प्रवचनं, अनभिमतकारीति सम्बन्धः । कस्मात् अत आह–क्रमवेत्यादि, तत्र 'क्रमतः' पर्वतिथिसमयाभिहित क्रियाकदम्बकं भाद्रपदचन्द्रसूर्योपराग–

सङ्क्रान्ति–माघमाला–प्रपादानादि, कुगुरु–कुत्सितदेशनाकरणप्रवणः सन्मार्गदूषणपराश्चो धार्मिकजनमुग्धोपद्रवतत्परः मुखलोलतया यतिक्रियाविकलो जनविप्रलिप्सया दुष्कर-क्रियानिष्ठोऽपि वा लाभपूजाख्यातिकामः कुत्सित आचार्यः, कुग्राहः–सिद्धान्तबाह्य–स्वमतिकल्पित–स्वाभ्युपेतासत्पदार्थसमर्थ–नानुष्ठानगोचरो मानसोऽभिनिवेशः, कुबोधो ऽन्यथा व्यवस्थितस्य भगवदागमार्थस्याज्ञानाद्विशिष्टसम्प्रदायाभावाद्वाऽन्यथा परिच्छेदः, कुदेशना–श्रुतोक्तार्थानां संप्रदायाज्ञानात् मिथ्याऽभिनिवेशाद्वा वैपरीत्येन प्ररूपणं, अत्र च कुगुरुग्रहणेन कुदेशनालाभेऽपि पृथग्गुणादानं तस्याः सकलेतरदोषेभ्यो महत्त्वख्यापनार्थं, ततः कुमतं चैत्यादि दूरतः, तावन्मात्रो–लेशस्तस्मात्, आस्तां कुमतादिभ्यः समग्रेभ्यः, किन्तु तेषामल्पमात्रादपि 'स्फुटं' व्यक्तं निश्चितमिति यावत्, अनभिमतकारि–अनिष्टविधायि दुरन्तसंसारकान्तारनिरन्तरपर्यटनकारणमित्यर्थः। ननु कथमेतानि गरीयांसि धर्मकृत्यादि लेशमात्रेणापि प्रतिहन्यन्ते ? नहि मृणालतन्तुना दन्तिनः प्रतिबध्धुं पार्यन्ते इत्याशङ्क्य विवक्षितार्थप्रसाधनानुगुणमुपमानमाह–'वरभोजनमिव' स्निग्ध–मधुर–सुस्वादुजेमनमिव, इवेत्युपमानद्योतकमव्ययम्। 'विषलवनिवेशतो' गरलकणप्रक्षेपात्। अयमर्थः–ईदृशी हि विषकणस्यापि पारिणामिकी शक्तिर्यया द्रव्यमपि बह्वपि भोजनं क्षणादेव सकलमसौ स्वात्मभावेन परिणमयति, तथा परिणमितं च तद् भुज्यमानमपायाय जायते यथा, तथा कुमतादिलेशस्यापि मिथ्यारूपत्वात्–एवंविधो महिमा, येन महीयोऽपि जिनगृहविधानादि धर्मकर्मस्वस्वरूपतया भावयति, तद्भक्ति च तद्विधीयमानमपि संसाराय सम्पद्यत इति, अत एव सम्यक्त्वशुद्धिहेतवे कर्तव्यतया अभिहितान्यप्येतान्यसमञ्जसरूपया क्रियमाणानि तदभावापादकत्वेन श्रूयन्ते, यदाहुः श्रीहरिभद्रसूरयः–" पाएणणंत देउल जिणपडिमा कारिया उ जीवेहिं। असमंजसवित्तीए, न य सिद्धो दंसणलवो वि ॥ १ ॥ " तदेवं विषलवसंवलितभोजनोपमानेन जिनगृहादिविधानस्य कुमतादि लेशसंस्पर्शिनोऽप्यनभिमतकारित्वं व्यवस्थितमिति वृत्तार्थः ॥ २० ॥

अधुना मुग्धजनाकर्षणनिमित्त–जिनबिम्बप्रदर्शनादि द्वारेण लिङ्गिनां लोकप्रतारणं दर्शयन्नाह—

आकृष्टुं मुग्ध–मीनान् बिडिश–पिशितवत्–बिम्बमादर्श्य जैनं ॥ २१ ॥

व्याख्या—आकृष्टुं मुग्धमीनान् जैनबिम्बमादर्श्य नाम जैनैर्जनोऽयं वञ्च्यते इति सम्बन्धः। तत्राकृष्टुमिति स्ववशमानेतुं, न तु पुण्यमर्जयितुं, मुग्धा–हेयोपादेयविचार

शून्यतया धर्मभ्रष्टाधमाः त एव सकलप्रकटितया स्वहिताहितपरिज्ञानवैकल्यतासाधर्म्यात् मीनामत्स्यास्तान् 'बिम्ब' प्रतिमां 'बैल' मागधन्त 'आदर्श्य' दर्शयित्वा, यथा—भो भव्याः! ऐहिकामुष्मिकसुखविधानदक्षमिदमार्हद्बिम्बं, ततः पूजयत भक्त्येति सामान्यतोऽथवा अत्र स्पर्धैः एतद्बिम्बमार्हतं निर्मापितं, ते चेदमेव भक्त्याऽर्हं नियमेनापूपुजन्, ततो भवद्भिरपीदमेव विशेषेण पूजनीयं, तथाऽर्हद्बिम्बनिर्मापणमेव सम्प्रति भवभ्रमणविनिपतज्जन्तुतारणापालमिति भवद्भिः स्वश्रेयसे नवीनं भगवद्बिम्बं स्वनाम्ना स्थापनीयमिति विशेषतो मुग्धजनपुरतः प्रज्ञाप्येत्यर्थः। किल यतिना देशनाद्वारेण जिनबिम्बार्चनादि—गृहिपुरः फलमुपवर्णनीयं, तत्फललिप्सया तदनुसारेण गृहिणः स्वयमेव तत्करणादौ प्रवृत्तेः, न तु साक्षात् तद्बिम्बनिर्मापणयोरुपदेशो दातव्यः तदुपदेशस्य भावयतया यतेर्निषेधात्, लिङ्गिनस्तु कथमाजन्मामी गृहिणोऽस्माकं वश्या भविष्यन्तीति धिया ऐहिकमेव स्वार्थं केवलं चिन्तयन्तो धूर्ततया पूर्वपुरुषसम्बन्धितादि क्रमेण मुग्धेभ्यो जिनबिम्बमादर्शयन्ति, ते तु मुग्धत्वात् तदाशयमनवबुध्यमाना अनुभवदाहुतापूर्वकव्यसनेह—स्वकारित—ममत्वादिना तत्र जिनबिम्बादौ नित्यं द्रव्यं व्ययते, लिङ्गिनश्च तदुपयुञ्जते स्वेच्छयेति भवति तदाकर्षणार्थं लिङ्गिनां जिनबिम्बदर्शनमिति। किमिवेत्याह—'बिडिश' मत्स्यबन्धनं, तदग्रे मत्स्यविलोभनाय स्थापितं 'पिशितं' मांसं, तद्वत्। चरितरूपमाने, तदिव। यथा धीवरा मत्स्याकर्षणाय बिडिशाग्रे पिशितं स्थापयन्ति, त च लल्लोलतया स्वापायमागामिनमविभावयन्तो गम्भीरादपि नीराशयाभिर्गत्य मुग्धत्वात् तत्र विलीयमाना बध्यन्ते, एवं लिङ्गिनोऽपि मुग्धजनानां स्ववश्यताविधानायोक्तविधिना भगवद्बिम्बमादर्शयन्ति, न तु संसारनिस्तरणाय।

ननु कथं जिनबिम्बबिडिशपिशितयोरुपमानोपमेयभावः? समानगुणयोरेवोभयोरलङ्कारमन्यपूपमानोपमेयभावप्रतिपादनात्, महाकविकाव्येषु तथैव दर्शनात्, अत्र तु जिनबिम्बस्य सकलत्रिभुवनातिशायिनः सर्वोपमातीतत्वात्—अत्युत्तमवस्तूपमायोग्यत्वाद्वा, बिडिशपिशितस्य च सर्वथात्यन्तहीनत्वात्कथं तेनोपमा?, उत्तममात्रस्यापि हीनमात्रेणाप्युपमानोपमेयभावो न युक्तः, किम्पुनः सर्वोत्तमस्यात्यन्ताधमेन?, एवं च जिनबिम्बस्य बिडिशपिशितेनोपमानोपमेयभावप्रदर्शने कवेर्महापापप्रसङ्गः, तत्सर्वथा भावत्युपमानोपमेयभावो घटां प्राञ्चतीति त(स्थे)म। लोकाकर्षणेन स्वनिर्वाहहेतोर्लिङ्गिपरिगृहीतस्य जिनबिम्बस्योत्तमस्याप्यसदुपाधिवशात् दुष्परिवारपरिवृतराजादेरिव वाञ्छितफलासाधकत्वात् हीनताऽध्यारोपणोपमानेन साम्यापादनादुपमानोपमेयभावोपपत्तेः। अत्र चापविशेष बिडिशपिशितेनोपमानं लिङ्गिपरिगृहीतस्य जिनबिम्बस्यात्यन्तहेयता ज्ञापनार्थं, भागमेऽ-

१

तिहयस्याधाकर्मादेः गोमांसादिनैवोपमानोपमेयदर्शनादिति युक्तमुक्तं 'विडिशपिशितवद् 'बिम्बमादर्श्यमेन'मिति । साम्प्रतं प्रकृतमुपक्रम्यते—यथा 'तन्नाम्ना' जिननामधेयेन—भगवद्भाण्डागारनिमित्तमेते निर्माप्यन्ते, नास्मन्निमित्तमिति व्यपदेशेन 'रम्यरूपान्' रुचिररचनया दृष्टवचनया च मनोहराकारान् 'अपवरका' मन्तर्गृहा 'मठा' निलय विशेषास्ततो द्वन्द्वस्तान् 'स्वेष्टसिद्धयै' स्वयमेवाक्लमसुखेन वस्त्याम इत्यात्माभिमतनिष्पत्तये 'विधाप्य' कारयित्वा, ते हि शठाः स्वनिमित्तमपवरकादीन् निष्पादयन्ति मुग्धांश्च ज्ञापयन्ते—जिननिमित्तमित्यहो !! एतेषां जिनभक्तिरिति, तेषु ते रज्यन्ते तथैवोपजीव्यन्त इति वञ्चनप्रकारः । तथा 'यात्राः' पित्राद्युद्देशेन भवद्भिरष्टाह्निका कर्तव्या, अमुष्मिन्वा मासावामुना भावेन श्रीमत्यत्र देवगृहे यात्राः कृतास्तस्माद्भवद्भिरपि तथैव विधेया । तथा 'स्नात्रं' भाद्रपदादिषु पित्रादेः श्रेयसे युष्माभिरत्र स्नात्रं कर्तव्यमित्युपदेशव्याजेन यात्रास्नात्रविधापनं, ततो द्वन्द्वः । आदिशब्दाच्छुल्कानुकम्पापर्वग्रहः । तदादय 'उपाया' मुग्धविप्रलम्भनप्रकारास्तैः । ननु कथमेवंविधयात्रादीनां मुग्धवञ्चनप्रतारकत्वं ? यावता यथातथा भगवत्पूजायाः कुशलानुबन्धहेतुत्वादिति चेन्न, एवं हि लोकवेदाहरणप्रामाण्येन भगवत्पूजाविधाने भगवतोऽप्रामाण्यो(प)पादनम् मिथ्यात्वादिप्रसङ्गात्, यदुक्त—"जिदुम्मि विज्जमाणे, उचियं अणुचिट्ठएजमणुचियं । लोगाहरणं(प) न तहा, पयडे भगवयवयणम्मि ॥ १ ॥ लोगो गुरुतरगो खलु, एवं सइ भगवओवि इट्ठोवि । मिच्छत्तं य एवं एसा आसायणा परमा ॥ २ ॥" तथा 'नमसितकं' उपयाचितकं—भवता मिदानीमीदृगुपद्रवः समुपस्थितः तस्माद्भवद्भिस्तन्निवृत्तये जिनयोऽत्रदेवताऽम्बिकादिभ्य सनदुराणामियद्द्रव्यमेषणीयमिति गृहिणः प्रतिजिनाद्युद्देशेन विचम्यपविधापनमिति यावत् 'निशाजागर' उपसर्गवर्गोपशमनाय प्रवचनदेवतादीनां पुरतो वस्त्रादिस्थापन—गीत-वाद्यलास्यपुरस्सरं सकलरात्रिजागरणं । ततो द्वन्द्वः । आदिग्रहणादन्येषामपि शान्तिकपौष्टिकानां सङ्ग्रहः । तदादीनि 'छलानि' छद्मानि—लोकोपजीवनार्थमागमान भिहितत्वेन विलोभननिमित्तानीति यावत्, तैः करणभूतैः, चशब्द उक्तवचनप्रकार समुच्चये । श्रद्धालु—विवेकविकलधर्मेच्छावान्, विवेकिनो हि प्रायेण नैवंविधैः प्रतारयितु पार्यन्त । 'नामतः' संज्ञामात्रेण जैनै—र्जिनदेवतैर्न तु क्रियया, भ्रष्टाचारत्वादेषां, तेन लिङ्गिभिरित्यर्थः । 'शठैः' प्रपञ्चप्रपञ्चनचतुरैः, छलित इवेत्युपमान, यथा 'छलितः' शाकिन्यादिभिर्वशीकृतः तथाविधचेतन्यराहित्यात्सुखेन वञ्चयितुं शक्यते, तथाऽय—एष 'जनः' भावलोको हा !!! इति विषाद 'वञ्चयते' विप्रलभ्यते, महानयम् अस्माकं चेतसि विषादो—यद्धर्मार्थी लोको धूर्तैः स्वार्थं वञ्चयित्वा दुर्गतौ पात्यत इति वृत्तार्थः ॥ २१ ॥

साम्प्रत तेषां प्रत्यह सर्वविरतिरूपप्रत्याख्यानभङ्गकरणेन तपभरनायमाव प्रतिपादयन्नाह—

सर्वारम्भ-परिग्रहस्य गृहिणोऽप्येकासनाद्येकदा ॥ २१ ॥

व्याख्या—'सर्वारम्भ परिग्रहस्य' सकलसावद्यव्यापार धनधान्यादिसङ्ग्रह-तत्परस्य 'गृहिणोऽपि' श्राद्धस्यापि, आस्तां महामुनेरित्यपि शब्दार्थः । 'एकाशन' मन्तर्दिवसमे कवारनियमितभोजनः प्रत्याख्यानभेदः तदादिर्यस्य निर्विकृतिकादेः तदादिप्रत्याख्यान 'एकदा' कदाचिदष्टम्यादितिथिषु प्रमादबाहुल्येन नित्यप्रत्याख्यानाभावात् 'प्रत्याख्याय' निपद्य, तदपि कदाचित्तदेकाशनादि ' न रक्षतो 'ऽनाभोगसहसाकारादिना न पालयतो—भञ्जत इत्यर्थः । 'हृदि' चेतसि 'भवेत्'—जायेत 'तीव्रो' निष्ठुरोऽनुतापो—बहुना कालेन तावदद्य प्रत्याख्यानं कृतं तदपि मया मन्दभाग्येन भग्नमतो धिग्मां, कथ मे शुद्धिर्भविष्यतीत्येवंरूपः पश्चात्तापः 'सदा' सर्वदा यावज्जन्म-प्रायश्चित्तं गुरुभ्यो नाददति । 'षट्कृत्वः' त्रीन् वारान्सायन्तनप्रतिक्रमणे । त्रींश्च प्रगेतनप्रतिक्रमणे षड्वारान् "सव्वस्सवि देवसिय दुच्चितिय दुब्भासिय दुच्चिट्ठिय" इत्यादौ सप्तदशवारान् "सब्बस्साया वारे कृत्वस् तद्धितः" त्रिविध त्रिविधेति, अनेन सामायिकसूत्रमुपलक्षयति, किल सावध: सायन् प्रातश्च प्रतिक्रमणे सामायिकसूत्रमुच्चारयन्तस्त्रिविधं त्रिविधेनेति पठन्ति, यथा—"[करेमि भंते ! सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए, तिविहं तिविहेणं मणेणं वायाए काएणं" मित्यादि] । तत्र त्रिविधमिति तिस्रो विधा यस्येति त्रिविध—कृतकारितानुमतलक्षण, त्रिविधेति त्रिविधेन करणेन मनोवाक्कायरूपेण सावद्य योगं प्रत्याख्यामि इत्यत्र रूपतया 'अनुदिन' प्रतिवासरं 'प्रोच्य' अभिधाय—प्रतिज्ञाया पीत्यर्थः, अप्रतिज्ञातानुष्ठानस्य हि भङ्गेनापि न तथा दोष इत्यपि शब्दार्थः । 'भञ्जन्ति' खण्डयन्ति ये लिङ्गमात्रधारिणः तेषां । 'तु' गृहिणो भेदप्रदर्शनार्थः, क्व तच्छ्राः सर्वेऽप्य श्रमाण्यप्रकाशेपार्थाः । 'तपो'ऽनशनादि, नित्यप्रत्याख्यानस्य सर्वसावद्ययोगविरति रूपस्य सकललोकसमक्षमभ्युपेतस्य भङ्गप्रदर्शनेन नैमित्तिकप्रत्याख्यानस्यापि कथञ्चि ल्लोकपङ्क्त्या विहितस्योपवासादेः भङ्गानुमानात्—नास्त्यत्र तेषां कश्चित्तप । क्व 'सत्यवचनं' तथ्यवाक् ?, सर्वं सावद्यं योगं न करोमीत्यभिधाय पुनस्तस्यैव सविशेषसेवनात्, प्रत्यक्षमृषावादिताप्रसङ्गेनांशेनापि सत्यवचनाभावात् । क्व 'ज्ञानिता' सिद्धान्तरहस्य परिच्छेत्तृत्व ?, ज्ञानस्य हि फलं विरतिः तस्याश्च भावशीलतया तैः समूलमुन्मूलनात् तथा च कथञ्चित्सतोऽपि ज्ञानस्याकिञ्चित्करत्वेन तदाभासत्वात्, ज्ञानगन्धोऽपि तेषां नास्तीति । क्व 'व्रतं' दीक्षा, दीक्षापादानेऽपि प्रत्याख्यानभङ्गादर्शीकमात्रेण दीक्षाया

ऽपायकपापादनात् अत तेषां नास्ति । अत्र चासकृत्तच्छब्दोपादानेन लोके लोकोत्तरे च तपःप्रसूतेः तपस्तादिकं न सम्भवतीति ज्ञाप्यते, तेनायमाशयः—यदा किल गृहिणोऽपि सतत गृहारम्भसंरम्भवत्त्वात्प्रमादभरनिर्भरा अप्यनवगततत्त्वा अपि कदाचित्प्रत्याख्यानभङ्गेनैवमनुतप्यन्ते, तदा सुतरां यतीनां सर्वसावद्ययोगविरतानां विदितागमसाराणां कथञ्चित् विरतिभङ्गे पश्चात्तापः प्रायश्चित्तग्रहणं युक्तः, ये तु निःशूकतया तां भञ्जन्तो मनाग्लज्जामपि नावहन्ति तेषां नास्त्येव तपःप्रसूतीति वृत्तार्थः ॥ २३ ॥

इदानीं तेषां लोकोपहासपुरस्सरं जिनपथपरिपन्थित्वं वृत्तद्वयेन प्रकटयन्नाह—

> देवार्थव्ययतो यथारुचिकृते सर्वर्तुरम्ये मठे ॥ २४ ॥
>
> इत्याद्युद्धतसोपहासवचसः स्युः प्रेक्ष्य लोकाः स्थितिम् ॥ २५ ॥

व्याख्या—येषां स्थितिं प्रेक्ष्य लोकाः सोपहासवचसः स्युरिति सम्बन्धः । कथमित्याह—अहो इति विस्मये, सितपटाः—श्वेताम्बराः 'कष्टं' दुष्करं 'चरन्ति' अनुतिष्ठन्ति 'व्रतं' प्रव्रज्यां, महदाश्चर्यमेतत्—यत्-सितपटाः कलाबन्येवंविधं व्रतकष्टमनुभवन्ति, नहि सम्प्रतितनैर्मानवैरल्पसत्त्वैरेवंविधं कष्टं कर्तुं शक्यते, अथ च सुखैरप्येवंरूपं व्रतं कर्तुं पार्यत एव, सुखहेतुत्वादित्युपहासः । अत्र कथमेषमुपहासः तेषां तैः क्रियत ? इत्यत आह—'साधुव्याजेन' यतिछद्मना विटाः, नामी भावतः साधुगुणायोगात्, किन्तु साधुव्याजेन विटाः, सकलतल्लक्षणोपपत्तेः । तदेवाह—'देवार्थव्ययतो' देवगृहाधिपत्ये न तद्द्रविणस्य तदधीनत्वात् जिनवित्तविनियोगेन 'यथारुचि' स्वमनोऽभिलाषानुरूपमित्यर्थः । 'कृते' निष्पादिते 'सर्वर्तुरम्ये' सकलवसन्तादिरूपतो विभक्तकालविशेषमनोहरे मठे प्रतीते, तत्र 'नित्यस्थाः' सततवासिनः, सुविहिता हि देवद्रव्योपभोगभयात् यतिनिमित्तनिर्मितत्वेन महासावद्यत्वाच्च मठे न वसन्ति, किन्तु याचिते याचन्ति—वाचयन्ति परगृहादावेव, तत्रापि ना[न]वरत वसन्ति, नित्यवासस्य च यतीनां श्राद्धादिप्रतिबन्धलाभवादिहेतुत्वेन प्रतिषेधात्, उद्यतविहारस्यैव ममकाराद्युच्छेदनिमित्तत्वेनाभिधानात् । एते तु सातलम्पटतया मठे नित्यकृतस्थितयो विलसन्तीति कथं न भवन्ति विटाः ? । तथा 'शुचयो' निर्मला 'पट्टतूल्यः' पट्टांशुकसंवीता हंसतूलादि मयाः अप्यासिकाविशेषा , यद्वा 'पट्टाः' श्रीपर्णादि दारुनिर्मिता ताः 'शयनं' शयनीयं येषां ते तथा, साधवो हि कम्बलादि संस्तारक एव शेरते, न पट्टतूल्यादिषु, तासां प्रमार्जनाद्यशुद्धे विभूषाप्रातशीलत्वप्रसङ्ग कृत्वालोकोपहासहेतुत्वाच, एते तु तत्र शयाना विटत्वं प्रकटयन्ति । तथा 'सद्गन्दिका पासता' शोभनगन्दिकायासनाः—शोभनगन्दिकामसूरकादि विष्टरमात्रः, गन्दिकायुप

वेशने च दोषा मुनीनां प्रागेवोक्ताः । 'सारम्भाः' मठ-वाटिका-कूप्यादि-महासावद्य-व्यापारकरण-कारण-प्रवणाः 'सपरिग्रहाः' गृहिवत् वाणिज्यादिप्रयोजनेन धनधान्य स्नेहादिभाण्डसङ्ग्रहपरायणाः 'सविषयाः' चक्षुरादीन्द्रियानुकूल-नर्तकीदर्शन-ताम्बूल स्वादन-चन्दनाद्यङ्गराग-गन्धर्वगीत-श्रवणादिविषय-सततानुषक्तचेतसः 'सेर्ष्या' विषयासक्तत्वात् कामुकत्वादभिमतां योषितमन्येन सार्द्धमालापादिविदधानामवेक्ष्य तं प्रत्यसूयामाजः 'सकाङ्क्षाः' सम्भोगविलासाभ्यासातिवृष्णया नवनवोपजायमानरिरंसो त्कलिकाः । आरम्भादयश्च यतीनां बहुदोषत्वादनेकधा निषिद्धा एव । 'सदा' सर्वदा, विषयाद्यासेवनादिभवाभ्यासात्, कदाचित् साधुमुनेरपि कस्यापि चेतोविकारमात्रं प्रादुःष्यात्, न तु सर्वदा, तदैव तेषां ज्ञानाङ्कुशेन स्वचित्तमाकृष्य मिथ्यादुष्कृतादि प्रायश्चित्तमति पत्तेः, इति साधूक्त-'साधुभ्याश्रविदा' इति ॥ २४ ॥

'इति' उक्तप्रकाराणि, आदिशब्दात् अन्यान्यप्येवं प्रायशः विडम्बना व्यञ्जकानि वर्चांसि गृह्यन्ते । तत्र इत्यादीनि-उद्धतानि-वहुजनवदनस्य मुद्रापिधानशक्यत्वादनि इत्थङ्कतयोद्गतानि, सर्वत्रास्खलितानीति यावत् । 'सोपहासानि' हास्यासमाक्षि 'वर्चांसि' वचनानि येषां ते तथा स्युः-मैवपूर्वोक्ताः-प्राकृतजनाः कुतीर्थिकभाविताश्च जैनपथमत्सरिणः 'प्रेक्ष्य' साक्षात्कृत्य, येषामिति पदं तुर्यपादस्थितं सकलं वाक्यं दीपयति, तेन येषां स्थितिमित्यादि सम्बध्यते । 'स्थितिं' यति अनुचितासमञ्जसामाचारीं,स्वरूपेणैव तावत् मत्सरिणः सर्वस्याप्युपहासं कुर्वन्ति, किम्पुनः सम्प्रति निरतिशयस्य जिनशासनस्य ?, तत्रापि लिङ्गिनां तथारूपं वैरूपं व्यवहारं वीक्ष्य कथङ्कारं न कुर्युरित्यर्थः । तथा 'श्रुत्वा' आकर्ण्य येषां स्थितिं 'अन्ये' अपर 'अभिमुखाः' खेदपदर्शनेभ्यः सकलो पपत्तिकलितमिदं जैनदर्शनं, यतोऽप्यत्र दर्शने छान्तात्मानः क्रियानिष्ठाश्चोपलभ्यन्ते, ततोऽस्माकमपीदमङ्गीकर्त्तुमुचितमिति चेतसोऽभ्युपगमविषयीकृतजिनशासनास्तेऽपि, आसतां तदपर इत्यपेरर्थः । 'श्रुतपथात्' जैनसिद्धान्तमार्गात् वैमुख्य, एतावन्तमनेहसं वयमेवम् अज्ञास्याम-यदेतदेव तात्त्विकं धर्मदर्शन निरपवादं, परं यदत्राप्येवं विधा असदा चारकारिणो विलोक्यन्ते तदाऽलमनेन ताम्र-हिरण्मया-लङ्कारदेशीयेनान्तो निस्सारेण बहिर्मात्रमनोहरेण सर्वथा, प्राक्स्वीकृतमेवास्माकं दर्शनं श्रेयः, अहो जैना अन्यथा वादिनोऽन्यथाकारिण इत्यादि वचनसन्दर्भेण 'वैमुख्य' पराङ्मुखत्व सर्वथा बहि र्भावमिति यावत् 'भात यते' दर्शयन्ति । तथा येषां 'मिथ्योक्त्या' मृषावचनेन, ते हि स्खलिताचारत्वेन सर्वशङ्कितत्वात् भ्रमभङ्गमुत्थेष्टितं प्रति कर्णाचित्प्रष्टाऽसन्तो मति म्लुचवदलीकं भाषन्ते, यथा-क एवमाह ?-न वयमेवंविधमेव कारिण इति । तत्र

'दृष्टोऽपि' सम्यग्दृष्टयो जिनमतान्तःस्था अपि प्रायशः, किम्पुनरन्ये ? इत्य पेरर्थः । 'बिभ्रति' धारयन्ति–कुर्वन्तीति यावत्, मनः–चेत 'सन्देह' इव किमथमन्यथा चेत्युभयकोटी तत्रेत्यनवधारणज्ञानं संशयः, स एवं एकत्रानवस्थितरूपत्वसाधर्म्याद्दोला, तया चलं, यथा दोलारूढं वस्तु तस्यामचलत्वाच्चल, एवं सुदृशामपि मनः । अथवा 'सन्देहेन करणभूतेन दोलावच्चलं येषां नाम जैनानां ते अमी सर्वत्र सम्प्रति प्रस्तुतत्वात् पुरोवर्तिनः । नन्विस्यपक्षमायां । 'सर्वथा' सर्वैः प्रकारैः जिनपथप्रत्यर्थिनो' भगवन्मत-प्रत्यनीकाः, न तु केनापि प्रकारेण तदनुकूला अपि जैनदर्शनोद्दास–तदभिद्रवपेषुरूपा पादनादिना जिनशासनज्ञुपचयहेतुत्वेन यत्सुतस्तेषां तदुच्छेदकत्वात् । यथां चापराधेन श्रवणरक्तविशदे भगवच्छासन लोकोपहासविपर्यासादयो दोषाः प्रादुर्भवन्ति तेऽनन्त संसारिणः सिद्धान्ते प्रतिपादिताः, महापापीयस्त्वात् । 'तत' इत्येतत्पदमग्रिमवृत्तौ सम्बंध्यत इति वृत्तद्वयार्थः ॥ २५ ॥

साम्प्रत कृपणवर्तिनां विषिषय प्रत्येकान्तिकीमात्यन्तिकीं च निरुपमां च मनसो दुष्टतामुपलभ्य तदुत्पाद च इतरजनमनःकारणसामग्र्या असम्भाव्यैः तद्विलक्षणां तदुत्पाद सामग्रीं सम्भावनाद्वारेणाह–

सर्वंकषकटकालकूटपरुषः सर्वैरपुण्योच्चयैः ॥ २६ ॥

व्याख्या–'तत' शब्दस्य प्राक्तनवृत्तस्थस्येह सम्बन्धनेन, यतोऽमी सर्वथा सत्यच दुष्टचेतसः ततः तस्माद्धेतोः, किमित्याह–नूनमिति सम्भावनायां, अहमेवं सम्भा वयामि–यावन्त्यतिदुष्टवस्तूनि जगति सन्ति तावद्भिर्दुर्योगमासेदुषां क्रूरं मानसमकारीति सम्बन्धः, कथमन्यथा स मनसोऽतीव क्रूरता ? इतरजनमनःसाधारणकारणसामग्रीतः तदनुपपत्तेः, कारणानुरूपत्वात्कार्यस्य, न च हि न्यग्रोधबीजाच्छिशुमन्दप्ररोहः । कैस्तैरित्याह–'सर्वैः' सकलैरुत्कटकालकूटपटले–नूतनत्वात्स्युमसयोग्यविविषभेदसमूहैः, पक्वद्भिर्व्यादिभिरुत्कटैश्च कालकूटसकलैस्तत्पटलैर्वा तादृक् क्रूरमनसो जनयितुमशक्य त्वादयुक्त । एवमुत्तरपदेष्वपि योज्य । सकलकालकूटपटलैरेव कवले प्रकृतमनसः कर्तुमशक्यत्वात्–अपुण्योच्चयैरित्यादि वाक्यावतारः,ततश्च सर्वैः–अखिलैरपुण्योच्चयैः पाप राशिभिः, सर्वव्यालकुलैः–अशेषाशीविषसन्दोहैः 'समस्तविधुराधिव्याधिदुष्प्रदैः' दुरन्तम्य सनवेतः पीडा–गद–मरकादि पापप्रदैरेभिरखिलैर्दुष्टैरेकसामग्रीभावेन सम्भूय 'क्रूरं' मर्मस्पर्शकं 'मानसं' चेतः 'अकारि निर्ममे । क्रूररूपस्य मनसो निर्माणे नियेयमत्र, एतेनास्य मनस इतरमनोभिः साधारण्यमपि निरस्तमित्येतदपि सम्भावयामि इतरमनो

विलक्षणसामग्रीजन्यत्वेन वैजात्योपपत्तेः, न हि मृत्पिण्डदण्डादि–तन्तुवेमादिविलक्षणसामग्रीजन्ययोर्घटपटयोः साजात्यं नाम, तथा च तन्मनसः कदाचिदपि न शुभभावतापत्तिः, न हि भूनिम्बस्य–शर्कराभारैः सिञ्चितस्यापि तेनाप्यापादयितुं शक्यते, तत्कस्य हेतोः ? स्वस्वसामग्र्या विजातीयतयैव तयोरुत्पत्तेरिति। अथवा मनः सिद्धमेव तस्य तु क्रूरत्वं विधेयं, तस्य कालकूटादिभिः साम्य। अथास्मिन् पक्षे क्रूरत्वस्यौपाधिकत्वात् अपगमप्रसङ्गे, वस्त्रादिषु महारजनरागस्य तथा दर्शनादिति चेन्न, औपाधिकस्यापि धर्मस्य कयाचित् सामग्र्या जन्यमानस्यानपगमदर्शनात्, यथा पट्टांशुकादिषु नीलीरागस्यौपाधिकस्यापि न कदाचिदपगम इति। तदुपपन्नमेतन्नूनं क्रूरकारि मानसमिति। 'अमु' प्रत्यक्ष 'दुर्मार्गे' कुपथ 'आसेदुषां' अभ्युपेयुषां लिङ्गिनां वञ्चकानां चेति शेषः। ननु भवतु तेषां क्रूरं मनस्तथापि किं न उच्छिन्नमित्यत आह–'चौरायितेन' दुष्टाशयत्वेन 'निन्युषां' उच्छिन्दिषुणां 'जिनपथं' भगवत्प्रणीतं सत्पथं सन्मार्गवर्तिनामुपसर्गकरणेन वस्तुतो जिनमार्गं प्रकटयद्भिर्वेषस्माकं छिन्नमित्यर्थः। अथ जिनपथं नि [ न्य ]न्यतां तेषां द्विजादीनामिव किं दर्शनान्तरपरिग्रहेण मतान्तरं प्ररूपणा नेत्याह–'वाचा' वचनेन स्वमतिकल्पितमप्यौद्देशिकभोजनादिमार्गं 'एवमः' अयमेव स जिनप्रणीतः पन्था नान्य 'इति' एवं प्रकारेण 'उदुषां' अभिदधुषां, न ते दर्शनान्तरस्थाः स्वमतं परूपयन्ति, तस्यैर्जिनपथवर्तिनो जनस्य प्रतारयितुमशक्यत्वात्, किन्त्वस्मिन्नेव दर्शने वेषमात्रेण स्थिताः स्वप्ररूपितं कुमार्गं जैनमार्गतया वदन्तो मुग्धलोकं व्यामोहयन्तीत्यर्थः, एतावता संरम्भेण सत्पथं प्रत्यतीव प्रत्यनीकत्वं तेषां प्रकटितं। इह च चेत्यत्र 'त' शब्दादिर्जैनीयलोपे सत्यपि समतिपत्तेऽपि "ते यदा पादपूरणे सन्ति" रिति विशेषलक्षणेन सन्धिविधानमिति वृत्तार्थः ॥ २६ ॥

'मत इरप' न्तरा पदद्वयोरप्यनयोर्विद्वयोः सम्बन्धयोजनार्थं, यथाभिमद्दुच स्यादौ योत्स्यते, इदानीं तेषां वचनमात्रमपि विवेकिनः श्रोतुं न युक्तमत इत्याह—मत –

दुर्भेदस्फुरदुग्रकल्मषतमः स्तोमास्तथी भाषुणाः ॥ २७ ॥

व्याख्या—यत एव नामैते जैनपथं प्रति दुष्टाः, अतो–ऽस्माद्धेतोः, किमित्याह तेषां 'वचांसि' कुपथप्रतिपादकानि वचनानि 'कुर्वे' विदधे कर्णौ स्वभवये 'सकर्णः' सश्रोत्रः। अथ च सहृदयः 'कथ' केन प्रकारेण ? न कथञ्चिदित्यर्थः। नहि सकर्णस्य कर्णकटूनि स्पष्टपरमर्माणि वचनानि सतानां श्रोतुं युक्तानि, किन्तु कर्णयोरेतदेव फलं यत्पीयूषवर्षुका अपहसितमधुकाः सतां सूक्तयः श्रूयन्ते। अथ च सकर्णस्य प्रेक्षावतः

कुपथवर्तिनां भाषितानि कर्णे कर्तुं न युज्यन्ते, तच्छ्रवणस्य साधूनामपि मिथ्यात्वनिबन्धत्वेनाभिधानात्। कीदृशामित्याह–'दुर्भेदो' निबिडत्वात्–दुरुच्छेदः' स्फुरत् मनसि सततावस्थिततया जागरूक 'उग्रो' दृढः 'कुग्रहः' चैत्यवासादि प्रतिष्ठापनविषयो मिथ्याऽभिनिवेशः स एव 'तमः स्तोमः' सत्पथदर्शनान्तरायकरत्वादन्धतमसः पटल, तेन 'भस्तं' छन्न 'धीः' प्रेक्षा, सैव सत्पथप्रकाशकत्वात् चक्षुर्लोचनं येषां ते तथा, तेषां, यथा तम स्तोमेन तिरोहितचक्षु पन्थानं न पश्यति तथा तेषामपि धीः कुग्रहेण तिरस्कृतत्वात् न सन्मार्गे सुगयते। तथा 'सिद्धान्तद्विषतां' तद्विपर्यस्तार्थप्ररूपणया तदुच्छेद प्रवृत्तत्वादागमवैरिणां, निरन्तरमहामोहात्–व्यसनातिरेकादविवेकात्। अहमिति निपातोऽस्मदर्थः ततश्च वयमेव श्रेष्ठाः, नास्मत्समः कश्चिदित्यात्मानं मन्यन्ते च ते अहम्मानिनस्तेषां, विवेकिनां हि गम्भीरत्वेन महति गुणगणे सत्यप्यनुत्सेकात्, मूढानां तु तुच्छतया स्तोकेऽपि तस्मिन्–जगतोऽपि गुरुतया मननात्, तथा 'स्वयं' आत्मना 'नष्टाः' सुगतेरपाऽन्तरतम्–मन्याय्ये पथि प्रवर्तमाना जनपुरतः सत्यापयितुमशक्नुवन्तः 'क धर्मः ? क सम्प्रति यतिन' इत्यादि नास्तिक्यं प्रतिपन्नाः तेषां, 'अन्येषां' आत्मव्यतिरिक्तानां 'नाशनकृत' नास्तिकताभावापादननिमित्त 'वद्धोधमानां' यदि हि एतानप्यात्मना रूपमित्यमी कुर्मस्तदा सुन्दरं भवत्यन्यथैते धार्मिकमन्याः पश्यवाग्भिः अस्मान् सन्तक्षिप्यन्तीत्याशयेन तद्भावनाय विहितप्रयत्नानां 'सदा' सर्वदा 'मिथ्याचारा' मुक्तिपथविपरीताः समाचारा मिथ्यात्वा–विरति–प्रमाद–कषाय–दुष्टयोगलक्षणाः, अथवा लोकप्रलम्भनहेतु–कषायेन्द्रियसंयमपुरस्सरं विषयप्रणिहितमनस्कत्वं, यदाह "कर्मेन्द्रियाणि संयम्य, य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढात्मा, मिथ्याचारः स उच्यते ॥ १ ॥" ततश्च 'वहतां' तद्युक्तानां, अतः तद्भाषितानि सुविहितैः मुमुक्षुभिर्न श्रोतव्यानीति तात्पर्यमिति वृत्तार्थः ॥ २७ ॥

अधुना वितथादिरूप धर्मवेषिणामपि तेषां कुपथस्य तथाविध–मुग्धजनोपादेयतां सविषाद प्रतिपादयन्नाह—

यत् किञ्चित् वितथं यदप्यनुचितं यल्लो–० लोकोत्तरो ॥ २८ ॥

व्याख्या—यद्यदिति वीप्सया सर्वसङ्ग्रहमाह–धर्मसाधनमनुष्ठानमिदं धर्मः ततश्च 'धर्म इति' सुकृतमिदमित्येवरूपतया 'ब्रुवन्ति' वदन्ति 'कुधियो' दुर्मेधसो नाम चैत्याः। यत्किमित्याह–यत्किञ्चिदिति, सामान्यतो निर्दिष्ट विशेषतोऽनिर्दिष्टनामक

'वितथं' अलीकं श्रेणिकराजरजोहरणबन्धनादि, न ह्येतदागमे कथंचिल्लिखितमस्ति, येन सत्यं स्यात्, परं लिङ्गिनः स्वच्छन्दतापादनार्थं तदपि धर्म इति भाषन्ते, यदाह–" श्री श्रेणिकः क्षितिपतिः किल सारमेय-लाङ्गूलमूलनिहित पतितप्रबन्धे। भक्त्या रजोहरण मित्यनृतं वदन्ति, ही !!! लिङ्गिनो कुमतया कुधियः प्रलब्धुम्॥ १ ॥ " तथा यदपि, अपिः समुच्चये। यच्चानुचित–मयोग्यं पित्राद्युद्देशेन पात्राकरणादि निमित्त हि धर्मनिमित्तं हि कस्यमात जिनमन्दिरे कर्तुमुचित, नान्यत्। पित्राद्युद्देशेन तु पात्रादि तत्र विधीय मान गुणबहुमानविकलकेवलस्नहनिबन्धनत्वान्न धर्मः, परं तदपि लिङ्गिनो धर्मोऽय मित्यभिधाय स्वोपयोगाय विधापयन्ति। तथा यल्लोके–जैनमार्गबहिर्भूतः शिष्टजनः 'लोकोत्तरो' जिनप्रवचनं, ताभ्यामुत्तीर्णं–बाह्यं मृतकभिक्षाप्रदानादि, एतत् हि लोकलोको त्तरयोर्विरुद्धत्वात् न धर्मस्ते तु गार्धादिहेतुनैतदपि धर्म इत्यभिदधति, यदाह–"भिक्षा मृतकमन्दिरे भगवतां पूजा मलिना क्रिया, हीनानां परमेष्ठि संस्तवविधिर्यच्छिक्षणं दीक्षणम्। जैनेन्द्रप्रतिमाविधापनमहो तल्लोकलोकोत्तर–व्यावृत्तेरथ–हेतुमप्यधिपनाः श्रेयस्तया पच्यते॥ १॥" तथा यच्चकहेतुरेव–संसारकारणमेव 'भविनां' देहिनां जिन मन्दिरे जलक्रीडादि। एतद्धि मदनोद्दीपनत्वात् क्रीडामात्रत्वेनाशातिकत्वाच्च संसारवर्द्धन मेव, परमेतदपि लिङ्गिनो धर्मच्छद्मना स्वायत्तलोकजनकुतूहलेन कारयन्ति। तथा यत् 'स्वाज्ञबाधाकरं' सिद्धान्तविरोधाबाधकम् औद्देशिकभोजनादि, यथा चौद्दिष्टकादीनां बाध बाधितस्य तथा प्राग्प्रेयोत्पादित, अथवा आषाढचतुर्मासकात् पञ्चाशत्तमदिनप्रतिपादितस्य पर्युषणापर्वणः भाद्रपदाचतुर्थ्यामति वर्षेऽस्मीतिवमेऽवि विधान। ननु कुर्वन्तु ते स्वमति कल्पित मार्गं, तथा वितथादित्वमावत्तात न कोऽपि ग्रहीष्यति, तथा चोक्तोऽप्यनुक्त कल्पो लोकोपादानाभावेन प्रसराभावादित्यत आह–' मूढा ' अज्ञानिनः तद्धर्मव्याजेन लिङ्गिप्ररूपित मतं अर्हन्मतभ्रान्त्या जिनमार्गोऽयमिति मिथ्याज्ञाने 'लान्ति' उपपाद्यते। अयमर्थः यथोभयगतचाकचिक्यादि सदृशधर्मोपलम्भात् परस्परव्यावर्तकरेखावास्यादि भेद धर्मानुपलम्भाच्च अरघनेऽपि शुक्तिकायां रजतमेतदिति धिया भ्रान्ताः प्रवर्तन्ते, अत्रापि सन्मार्गासन्मार्गगतजिनदेवताऽभ्युपगमभावाद्यपेक्षादि समानधर्मावगमादन्योन्यव्यवच्छेद कविष्यविधिप्रवृत्त्यादि विशेषधर्मानवगमाच्च वितथत्वादिना वस्तुतोऽनर्हे मतेऽपि प्रकृत मार्गोऽर्हन्मतमेतदिति बुद्ध्या मूढाः प्रवर्तन्त इति, न केवलमते कुमार्गं यद्रन्ति मूढास्तु त गृह्णन्त्यपीति च शब्दार्थः। हा इति खेद 'दुरन्तदुःषमाप्रभावस्य' दुःखावसानान्त्यसमायस्य 'विस्फूर्जितं' विजृम्भितमतदिति, कथमन्यथा कुपथस्याप्यतस्य बहुमुग्धजनोपादेयता स्या दतः कष्टमतत् यद् अद्यापि अयं कुमार्गोऽस्खलितप्रसरोऽनुवर्त्तत इति वृत्तार्थः॥ २८ ॥

साम्प्रतं मुग्धजनान् प्रति स्वमत मोक्षपथतया विक्षतः सत्पथगामिनश्च धार्मिकान् स्ववचनाऽननुरोधित्वेनाद्रवता भवज्ञानानस्य कस्यचिद्यथा छन्दाचार्यग्रामण्योऽप्रस्तुत प्रशंसया स्वरूपमाह—

कष्टं नष्टदिशां नृणां यद्दृशां चास्यन्धवैदेशिकः ॥ २९ ॥

व्याख्या—'कष्टं' तु समस्तत् नः चेतसि वर्तते, यत् किमित्याह, यदिति वाक्योपक्षेपे, चक्षुणामदृशां चास्य चन्धवैदेशिकः कान्तारेऽभीप्सितपुराध्वानं प्रदिशतीति सम्बन्धः। तत्र 'नृणां' पुंसां 'नष्टदृशां' अलोचनत्वारकान्तारपातेन दिग्मूढत्वात् प्रभ्रष्टप्राची प्रतीच्यादिककुपविभागपरिच्छिदानां 'अदृशां' काचकामलादिना दृग्विकलानां, न तु जन्मान्धानां, जन्मान्धो—जन्मप्रभृत्यारभ्य लोचनरहितः। न तु सोऽपि तद्देशस्थाय इतरेभ्यः श्रवणादिना विज्ञाय कथञ्चिदिष्टपुरपथं देशयतीति तत्रोक्त 'वैदेशिक' इति। विदेशे—योजनान्यवहिते देशान्तरे जातो वर्द्धितश्चेति वैदेशिकः। यदि तद्देशस्वरूपमात्रस्याप्य नभिज्ञत्वात्कथं प्रकृतमार्गं जानीयादपि, ततः कर्मधारयः। 'कान्तारे' वनसञ्चार शून्ये दुर्गवर्त्मनि 'प्रदिशति' प्रतिपादयति। 'अभीप्सितपुराध्वान' जिगमिषितः नगरमार्गं, किलेति वार्तायां। 'उत्कन्धरः' ऊर्ध्वग्रीवः कंधरामुन्नमय्य भुजदण्डमुत्क्षिप्य कथयतीति कष्टमेतत्। तुः पुनरर्थे। 'इद' वक्ष्यमाण पुनः 'कष्टतरं' पूर्वस्मादपि कष्टा महत्कष्ट। यत् किमित्याह—'सोऽपि' प्रागुक्तो मार्गदेष्टा 'सुदृशो' निर्मलनयना नव एव 'सन्मार्गगान्' इष्टनगरसुगमपथप्रस्थितान् 'तदिदः' सम्यक् स मार्गज्ञान् यत् हसति, सावज्ञमिति क्रियाविशेषण—अवहेलं 'अज्ञानिव' मार्गानभिज्ञानिव। यथा मार्गानभिज्ञा मार्गमुपदिशन्त उपहस्यन्ते लोकेन, तथैतेऽपि तेन। एवं प्रस्तुतमुपमान योजयित्वा प्रस्तुतमुपमेयमिदानीं योज्यते—कष्टमेतत् यन्नृणां—मत्यर्थेष्वपुरुषाणां 'नष्टदृशां' अतिमुग्धतया सत्पथकुपथविभागानभिज्ञानात् अदृशां—सम्यग्ज्ञानदर्शनविकलानां 'चास्यन्धः' सिद्धान्तरहस्यलेशानभिज्ञः सर्वथा अगीतार्थः। सोऽपि गीतार्थसंवासादेः कथञ्चित् मोक्षपथकथनप्रवीणः स्यात्—तत्राह—'वैदेशिको' गर्हिताचारत्वात् गीतार्थमुनि पुङ्गवसङ्गमाप्रवर्त्तितः। एष चाधुनिककुसङ्घप्रवरो निन्दङ्क्ष निःश्रेयसपथप्रस्थापिमार्ग कथनदीक्षितो यथाछन्दशिरोमणिः कश्चिदाचार्यो मन्तव्यः। 'कान्तारे' भवमहाटव्यां 'प्रदिशति' अभीप्सितपुराध्वानं—मुक्तिमार्गं 'उत्कन्धरो' दर्शिताहङ्कार विकारः। तथा च सोऽगीतार्थ उत्सूत्रभाषको मिथ्यादृष्टिः कथञ्चिदपि 'सत्पथ' मोक्षमार्गं न वेत्ति, नाप्यन्येन गीतार्थेन प्रतिपादितोऽपि प्रत्येति, इति कष्टं,

एतस्मादपरं 'तु' इति पूर्ववत् । सोऽपि प्रागभिहितो यथाच्छन्दाचार्यः 'सुदृशः' सम्य ग्ज्ञानदर्शनयुक्तः 'सन्मार्गभाजः' ज्ञानदर्शनचारित्रलक्षणमुक्तिपथप्रपन्नान् 'तद्विदो' मुक्तिमार्गाभिज्ञान् धार्मिकान् सुविहितसाधून् पश्यति सापत्नजनानिव, यथा-किममी मपीतार्था मूर्खशिरोमणयः सिद्धान्तरहस्यं जानन्ति ?, अहमेव सकलश्रुतपारावारपार दृश्वा, ततो यमहं ब्रवीमि स मुक्तिमार्ग इति । किमित्येवमुपदर्शतीत्यत आह-व महा कष्टमित्युपमानोपमेययोस्तुल्यतया योजना । अत्र च मुग्धजनपुरतो निरङ्कुशं स्वकल्पितं चैत्यवासादिकमुत्सूत्रपथं प्रथयन् विधिविषयपारतन्त्र्यप्ररूपणनिपुणान् सुगुरुसम्प्रदाय वर्तिनः सुविहितानऽसूययोपहसन् सम्प्रति वर्तमानः कुसङ्घाचार्यवर्गोऽनया भङ्ग्या कविना प्रतिपादित इति वृत्तार्थः ॥ २९ ॥

साम्प्रत श्रुत-पथा-भङ्गा-द्वारमुपसञ्जिहीर्षुः सुदृग्जिनमार्गस्य दुष्टोपचितसमुदित कारणकलापेन सम्प्रति दुर्लभत्व प्रतिपादयन्नाह—

सैषा हुण्डावसर्पिण्यनुसमयमुदसद्भव्यभावानुभावा, ॥ ३० ॥

व्याख्या—या आगम-प्रवेद्यागामितया लिखिताऽऽकर्ण्यते, सा एषा सम्प्रति प्रत्यक्षा, कालस्याप्रत्यक्षत्वेऽपि तद्भवकार्याणां प्रत्यक्षेणोपलम्भेनोपचारादेवमुक्तं । 'अवसर्पन्ति' प्रतिक्षणमायुः शरीरप्रमाणादयो भावा हानिं गच्छन्ति प्राणिनामस्या मित्यवसर्पिणी सिद्धान्तप्रसिद्धः कालविशेषः, हुण्डं-सकलाङ्गोपाङ्गानां यथोक्तमान वैकल्यहेतुः षष्ठं संस्थानं, तेनोपलक्षिताऽवसर्पिणी हुण्डावसर्पिणी, व्युत्पत्तिमात्रं चेदं, तस्यतस्त्वनन्ततम-कालभाव्यसंयतपूजानिव चनं चैत्यवासमुत्सादहेतुः शुभभावहानिकारणं कालभेदो हुण्डावसर्पिणी, सा च भगवति मोक्ष-गते जातेति । 'समयः-परमसूक्ष्मः कालः, ततश्चानुसमय-प्रतिक्षणं 'भव्यानां' मुक्तिगामिनां, अथवा 'भव्याः' शुभा 'भावाः' परिणामा 'अनुभावाश्च' प्रभावा भक्ति-निश्चया वा, ततश्च 'उदसन्तो' हीय माना भव्यभावानुभावा यस्यां सा तथा । हुण्डावसर्पिण्यां हि कालस्वाभाव्यात् धर्मार्थि नामपि प्रायेण भावा यादृशा वर्धमान धर्मे न तादृशाः धर्मान्तरे इत्यादि क्रमेण प्रति क्षणं सङ्क्लेशतारतम्यात्मातक्षयोपशमायमाना उपलभ्यन्ते, तथा च प्रकरणकारेणैव प्रकर णान्तरे प्रदर्शित-" कालस्स अइकिलिट्ठत्तणेण अइखेसिपुरिस-विरहेण । पायमणुगमत्तेण य, गुरुकम्मत्तेण य जियाण ॥ १ ॥ किर मुणियजिणमयाणवि हु, संमीकयसरिसधम्म-मग्गाण । पायमइसंकिलिट्ठा, धम्मत्थी विरय दीसंति ॥२॥" अत्र च प्रतदित्यनन संयोग परत्वेऽपि पूर्ववर्णस्य न गुरुत्व, छन्दः शास्त्रेऽर्धचरित[क्वा]नुरपया कथितत्वविशेषात् ।

तथा 'त्रिंशः' जैनसिद्धान्तोक्ताष्टाशीतिग्रह-मध्यात्त्रिंशत्तमः पूरणः, चः समुच्चये, उग्रग्रहो-जिनप्रवचनस्योदग्रोपसर्गकारित्वात्-दारुणो ग्रहः, अथ-मेष प्रत्यक्षोपलभ्यमानकार्यो भस्मराशिनामा, खं-आकाशं, तस्य च शून्यत्वात्खमिति गणितव्यवहारे शून्यस्य-बिन्दोः संज्ञा, नखा इति च विंशतेः संज्ञा, नखानां विंशतिसङ्ख्यत्वात्, ततश्च खं च खं च नखाश्चेति द्वन्द्वः, तैः पश्चानुपूर्व्या अङ्करचनया स्थापितैः मितानि-परिसङ्ख्यातानि 'वर्षाणि' संवत्सराः 'स्थितिः' एकस्मिन् राश्याव[व]स्थानं यस्य स तथा, एकराशौ वर्षसहस्रद्वयस्थितिक इत्यर्थः(२०००)। सोऽपि ग्रहो भगवन्निर्वाणकालानन्तरं वर्षसहस्रद्वयं यावत् क्रूरत्वात्-भगवज्जन्मराशौ सङ्क्रान्तत्वात्-भगवन्तं च मुक्तत्वेन दुःखीकर्तुमशक्तत्वात्-तत्प्रवर्तितस्यैव प्रवचनस्य बाधां करिष्यति। तथा 'अन्त्यं' दशमं, चः समुच्चये। 'आश्चर्यं' अनन्ततम-कालभावित्वादद्भुतम्-असंयतपूजाख्यं 'एतत्' इदानीं प्रत्यक्षं 'जिनमतहतये' आर्हतप्रवचनापभ्राजनापादनाय 'तत्समाः' तैः प्रागुक्तैस्त्रिभिः 'समा' तुल्यबला 'दुष्षमा' दुष्टा-लोकदुःखकारिण्यः 'समाः' वर्षाणि यस्यां सा तथा, कालचक्रस्य षडरकस्य पञ्चमोऽरकः, यथा प्राक्तनास्त्रयः समुदिता जिनमतं घ्नन्ति तथा चतुर्थी दुष्षमाऽपि। चः पूर्ववत्। इति प्रकरणे। 'एषु' प्रकटेषु हुण्डावसर्पिण्यादिषु 'एव' दर्शितप्रकारेण प्रतिपदं सुविहितलाघवासंयतगौरवापादनलक्षणदुष्टकार्यदर्शनाद्दृष्टेष्विव 'दुष्टेषु' क्रूरेषु 'पुष्टेषु' प्रकर्षकोटिं प्राप्तेषु हुण्डावसर्पिण्यादिषु चतुर्षु 'सत्सु' प्रतिसमय 'अधुना' साम्प्रतं 'दुर्लभो' दुरापो जैनमार्गः, प्रतिपत्तिविघ्नकारिणां हुण्डावसर्पिण्यादीनां दुष्टत्वात् महिम्ना च भूयोलोकस्य अनभिनन्दित्वात्कतिपयसात्त्विकजनोपादेय इति यावत् 'जैनमार्गः' अविमोहोरूप-भगवत्पथ इति हृदयार्थः ॥ १० ॥

एवं तावदष्टादशभिर्वृत्तैः प्रपञ्चेन लिङ्गिनां श्रुतपथबाधा प्रतिपादिता, सम्प्रति तैरेव धर्मतया प्रतिपादितं गुणिद्वेषधीरिति द्वारं निराकुर्वंस्तेषां गुणिद्वेषं दर्शयन्नाह—

सम्यग् मार्गजुषः प्रशान्तवपुषः प्रीतोल्लसच्चक्षुषः ॥ ११ ॥

व्याख्या—खलाः मत्सरिणः न क्षाम्यन्तीति सम्बन्धः। तत्र 'खलाः' दुष्टाः मत्सरिणः प्रकरणाल्लिङ्गिनः। कृतदुष इति दुषधातुः क्विबन्तोऽत्र दोषपर्यायः। ततश्च 'कृता' विहिता 'दुषो' दोषाः-स्वयमनेकेऽनर्था यैस्ते तथा, तत्स्वभावत्वात् तेषां अथवा 'कृता' आरोपिता 'दुषो' दोषा यैस्ते तथा, निर्मलेष्वपि सद्गुणिगुणेषु लोकमध्ये लाघवापादनाय स्वधिया विहितदोषारोपा इत्यर्थः। गुणवत्सु परोपकारो पणस्य तेषां कुलव्रतत्वात्। 'उद्यत् दुषः' भिन्नभिन्नं सुविहितदर्शनमात्रेणैव प्रकटित

ललाटतटभ्रकुट्यादि कोपविकाराः 'न क्षाम्यन्ति' न सहन्ते, द्विषन्तीत्यर्थः। तत्र देशेऽमीषां प्रचारेण मम लोकस्यागौरव्या भविष्याम इत्यादि बुद्ध्या मात्सर्यावष्टब्धस्वान्तमेव तेषां न ददतीत्यर्थः। सुविहित यतीन् सरमात्सुत्वमेवानुगुणविशेषणैस्तेषां भावयति- 'सम्यग्मार्गपुषः' भगवत्प्रणीतज्ञानादित्रयरूपमोक्षपथस्य भव्यानां शुद्धोपदेशप्रति बोधद्वारेण विस्तारकाः। एतेन तेषामुत्सूत्रभाषणप्रतिषेधमाह। 'प्रशान्तवपुषः' बहिर लक्षितरागादि विकारशरीरासाः, एतेनान्तरपि प्रबलरागाद्यभाव प्रकाशयति, अन्तस्त-त्त्वापे बहिः सर्वदा प्रशान्तत्वानुपपत्तेः। 'प्रीतोल्लसद्भुषः' द्विषतानपि प्रतीत्य प्रसन्नो-त्फुल्ललोचनाः, एतन बहिः कोपविकारपरिहारमाविष्करोति। 'श्रामण्यर्द्धि' प्राणाति पातविरमणादिपञ्चमहाव्रतविभूतिमुपेयुषः-आसेदुषः, एतेन दीक्षामूलं सर्वविरतिसम्पदं दर्शयति। 'स्मयमुषः' अहङ्कारतिरस्कारिणः, एतेन वाग्मित्वविद्वत्त्वादावभिमान हेतौ सत्यपि तदभाव प्रकटयति। 'कन्दर्पकश्रप्लुषः' मन्मथधुक्कदुवदाहिनः, एतन सर्वव्रतमध्ये निरपवादब्रह्मव्रतदाढर्यं द्योतयति। 'सिद्धान्ताध्वनि' सुद्धागममार्गे 'तरपुषः' स्यिरतवन्तस्तरपरानित्यर्थः, एतन स्वपक्षसूत्रक्रियानिषेध प्रतिपादयति। 'क्षमजुषः' क्षमामाजः, एतेनान्तरपि कोपनिरासं ज्ञापयति। 'मत्पूज्यता' विवेकी जनसेव्यता 'जगुषः' प्राप्नुषः, एतेन सकलश्रमणगुणगणसम्पत्तिमाविर्भावयति, निर्गुणानां विवेकिलोकपूजनासम्भवात्। 'विदुषः' विचक्षणान्, एतेन स्वसमयपर समयसार विदुरतां विस्तारयन्ति। न चैव गुणशालिषु यतिषु द्वेषः कर्तुं युक्तः, अमीषमोऽपि तद्वतस्य सकलगुणिगतगुणद्वेषरूपत्वेनानन्तभवभ्रमणनिबन्धनत्वात्, सिद्धान्तेऽप्यभिहित "भरहेरवयविदेह, पनरस वि कम्मभूमिया साहू। एक्कम्मि हीलियम्मी, सव्व ते हीलिया हुति ॥ १ ॥ संतगुणछायणा खलु, परपरिवाओ य होइ अलियं च। धम्मे य अवमाणो, साहुपओस य संसारो ॥ २ ॥" ततः प्रेक्षावता गुणिषु बहुमान एव कर्त्तव्यो, न द्वेष, इति वृत्तार्थः ॥ ११ ॥

अथ कथमेवं विधानपि सत्साधून् खला न क्षाम्यन्ति? मिथ्यात्वप्राबल्या दिति ब्रूमः, अत एव तद्वतो मूढजनस्य नामजैनपथदर्शिनः स्वरूपं निरूपयन्नाह—

देवीयदुत्सरोचितः जनमहामोहा न दर्शयति ॥ १२ ॥

व्याख्या—अहो! मिथ्यात्वग्रहिलो जन उरुदोषिणो दर्शयतीत्यादि सम्बन्धः। 'अहो' इति विस्मय, ग्रह मेतमोऽपवनिषधः, सोऽस्यास्तीति, अस्त्यर्थे इलुप्रत्ययः तद्धितः। इह मिथ्यात्वं प्रकरणादाभिनिवेशिकं गृह्यते, प्रायेण जैनमिथ्यादृष्टीनां "गोट्ठामाहिल

मारब्धे" इत्यादिनाऽभिनिवेशिकस्यैव तस्य प्रतिपादनात्। ततश्च तेन 'ग्रहिलः' प्रबलमिथ्याऽभिनिवेशग्रहगृहीत इत्यर्थः। 'अन्नो' धर्मध्यमि-मक्कधाद्दलोका, उत्तमो-महान्तो यतिजनस्तस्यात्यर्थमनुचितत्वेन 'दोषा' अपराधा रागद्वेषप्राणातिपातादय उरुदोषाः तद्वत् आचार्यादीनिति गम्यं। 'देवीयति' देवानिव-जिनानिवाचरति, यादृशा देवा नीरागा अतिशयादि मन्तश्च तादृशा अमी, तस्मादाराध्या इति देवैः तानु पमिमीते, न च तादृशां तेषां तदुपमानं समीचीनं, तेषां महादोषवत्त्वेन देवोपमान विधानस्य महापातकहेतुत्वात् परं मिथ्यात्वस्य विपर्यासरूपत्वात् विपरीतबुद्धिः तादृशा नपि तथोपमिनोति, एवमुत्तरपदेष्वपि भावनीयं। 'सतमहादोषान्' प्रकटप्रागुक्तमहद् पराधात् गुणप्रधानादीनिति शेषः। 'अदेवीयति' अदेवानिवाचरति, नामी देव सदृशाः, सदोषत्वात्-निरतिशयत्वाच्च, तस्मादनाराध्या इति। अत्र च क्षीणप्रायदोषाणां देवोपमानं सिद्धान्तेऽप्युदितं-" पडिरूवो तेयस्सी " इत्याद्याचार्यगुणवक्तव्यतायां 'प्रतिरूपः' विशान्त तात्पर्यपरिच्छेददक्षनाऽतिशयवत्त्वादिना तद्विषयबुद्धिजनकत्वात्तीर्थ करप्रतिबिम्बरूप इति व्याख्यानात्, स च विपर्यस्त-मतित्वात्तथा न करोति। एवमदेव प्राये देवबुद्धिर्देवप्राये चादेवबुद्धिरिति मिथ्यात्वस्वरूपं प्रतिपाद्य-गुरौ गुरुबुद्ध्यादिरूप तदाह-'सर्वज्ञीयति' सर्वज्ञमिव-सर्वविदमिवाचरति 'मूर्खमुख्यनिवहं' मन्दबुद्धीनामपि समूहं स्वाम्युपगच्छत्यिव यतिजनं, यथा-सर्वज्ञसदृशोऽयं मदीयो यतिजनः किं किं ज्ञातव्यं न वेत्तीति। 'तज्ञम्' षड्दर्शनतर्ककर्कशधियं स्वपरसमयनिर्णयभूमिं सूरि विदं 'मज्ञीयति' अज्ञमिव-बालिशमिवाचरति, यथा-न किञ्चिदप्ययं जानाति। अयमर्थः-न हि मूर्खशिरोमणेः सर्वज्ञेनोपमानं युक्तं नापि तत्त्वज्ञस्याज्ञेन, अत्यन्तमननु रूपत्वात्, परं स मिथ्याज्ञानात् एवमपि करोति। अधुना अमार्गे मार्गबुद्ध्यादिरूपं मिथ्यात्वं दर्शयति-' उन्मार्गीयति ' उन्मार्गमिव-उत्पथमिवाचरति। 'जैनमार्गं' शुद्ध मार्गत्वं, यथा-नायं भगवत्प्रणीतो मार्गः किन्तु अन्य इति।' अपथं ' कुमार्गं मायाप्रति चारितमौद्देशिकभोजनादिकं स्वकल्पितं 'सम्यक् पथियति' सम्यक् पथमिव-सन्मार्गमिव-सन्मार्गमिवाचरति। अत्रापि यत्-जिनमार्गस्य चन्द्रमत्प्रकाशरूपो मार्गेण-[ तामसेन ] नाम जैनेन साधर्म्यापादनं मार्गस्य ■ सत्पथतुल्यतापादनं तन्मिथ्यात्वोदयादिति। तथा 'स्व' आत्मानं 'अगुणाग्र्यं' निर्गुणधुर्यं 'कृतार्थीयति' कृतार्थमिव-निष्ठित मनोरथमिवाचरति। अत्रापि स्वस्य निर्गुणमुख्यस्य 'कृतार्थेन' गुणनिष्पन्ना पमानमविचारकत्वादिति। एवं तावज्ज्ञानातिरिक्तमनविषय मिथ्यात्वस्य सन्द च साध लोकविषयमपि प्रसङ्गात् किञ्चित्-दर्शयन्-' मिथ्यात्वग्रहिला जन ' आदिपदेनादि

मिथ्यात्वात्–जैनमतबहिर्भूतो लोकः ‘ द्वीयति ’ दवानिवाचरति, मुक्त्यर्थमाराध्यतया देवत्वेनाभ्युपै[ती]ति यावत् । तथ्वोपिमो–रागादिमतो लोकप्रतीतान् हरिहरादीन्, च महाबोधान् वीतरागान् लोकोत्तरविभुतान् अदेवीयति–अनाराध्यत्वेनानुमन्यते । अथ कथ मु–एतन्मिथ्यात्वमिति चेत् ? उच्यते–अतस्मिन्–तदिति प्रत्ययस्यैवतल्लक्षणत्वात्, तस्मान् न रागादिमन्तो देवाः । तथा सर्वज्ञीयति–सर्वविदयमित्यभिमन्यते मूर्खमुख्यनिकरं–अन्यपरतीर्थिकसमूहं प्राणातिपातादिनिरतं । तथा तत्त्वज्ञ–समस्तशास्त्ररहस्यवेदिनं पञ्च महाव्रतधारिणं सर्वज्ञप्रायं युगप्रधानसूरिं ‘ मज्ञीयति ’ मूर्खीयति । एवं च तत्त्वज्ञे गुरावज्ञ त्वारोपो मिथ्यात्व–विजृम्भित, एतावता चागुरौ गुरुभावना गुरौ चागुरुधीरिति मिथ्या त्व लक्षित । उ मार्गीयति–उत्पथत्वेन मन्यते जैनमार्गं, अपथ–कुतीर्थिकमतं सम्यक्त्व मीयति सन् मार्गीयति तदा स्वमगुणाग्रण्यमित्यादि तु पूर्ववत् । तदामर्षम्–एतन्मि थ्यात्वोपहता यदेव विपर्ययेण सर्वमवसाय गुणिनो क्षिपन्तीति हृदयार्थः ॥ १२ ॥

ननु किमिदानीं गुणिभिः प्रयोजनं ? सङ्घ एव भगवान्–निक्षेपदोषमोक्षमः समाश्रीयतां, भगवताऽपि च तस्य महत्त्वेन नमस्कृतत्वात् तथा च तदाज्ञया वर्तमा नानां मोक्षः प्राणिनां सम्पत्स्यत इत्याशङ्क्या–श्रुतासनसङ्घपक्षवर्तिनो भव्यजनस्यात्रैव पूर्वं मोक्षाभावमुपदिदर्शयिषुराह—

सङ्घव्याकृतचैत्यकूटपतितस्यान्तस्तरां ताम्यत ॥ १३ ॥

व्याख्या—‘ जन्तवो ’ धर्मार्थिनो भव्यजन्तवः त एवावलत्वात्–मुग्धत्वात् सत्त्व रहितत्वात्–च ‘ हरिणा ’ मृगाः तद्व्रातस्य–तत्समुदायस्य–उत्पथप्रवृत्त–उत्सूत्रभाषकः श्रुतज्ञाननिरपेक्षः स्वच्छन्दचारी स्वादलोलुपः साधु–साध्वी–श्रावक–श्राविकासमवायो भूयानिह सङ्घ उच्यते, स एव बलिष्ठत्वात् क्रूरत्वाच्च ‘ व्याघ्रः ’ शार्दूलस्तद्वशस्य–तदधीन स्य–दासवत्–पञ्च तत्र नियोज्यस्येति यावत् । द्वितीयपक्षे ग्रासविषयीभूतस्य ‘ मोक्ष ’ इति श्लिष्टपद, तेन जन्तुपक्षे ‘ मोक्षो ’ निर्वाणं, हरिणपक्षे च छुटनं व्याघ्रात्पलायनमिति यावत् । ‘ कुतः ’ कः स्यात् ? न कथञ्चिदित्यर्थः । ननु सुकरपञ्जुगुप्ता–जुगुप्सा–भावापन्नस्य मोक्षाभावः, किमायातं ? सङ्घस्येत्यत आह–‘ मुक्त्ये ’ निःश्रेयसार्थं ‘ कल्पितदानशील तपसोऽपि ’ स्वबुद्ध्याविहित जिनादिवितरण देवपारिश्रानयनादेरप्यास्तां तदितरस्येत्यपि शब्दार्थः । कथं तर्हि मोक्षाभाव ? इत्यत आह–‘ सङ्घाय ’ लिङ्गिसमुदायाय ‘ देयानि ’ कृतानि । द्वयेत्रापेति श्रा तद्धितः । ततश्च ‘ सङ्घाकृतानि ’ श्रावकलोकेन मक्त्या स्वद्र व्येण निर्माप्य लिङ्गिभ्यः सत्–देवनयैव चासायत्वं समर्पणेन तदायत्तीकृतानि ‘चैत्यानि’

